श्रीशिवमस्तु ।

# आत्मार्पणस्तुतिः

## व्याख्यासहिता

स्वस्तिश्रीभरद्वाजगोत्ररत्नाकर विराजन्म
णिवरशिवार्कमणिदीपिकापरिमळादिचतु
रधिकशतप्रबंधनिर्वहणपारीण श्रीकण्ठ
विद्येशावताररूपाद्वैतविद्याचार्यवर्य श्रीम
दप्पय्यदीक्षितचरण

विरचितात्मार्पणस्तुतिरियम् तत्कुलभव
श्रीचिदंबरानंदतीर्थशिष्यश्रीकाळहस्ति
शरणाविमुक्ताश्रयविमुक्तभवशिवानंद
यतीरित बालबोधाख्यव्याख्यायुता

श्रीकाशी दशाश्वमेधघट्टामराभिधमुद्राक्ष
रशालायाम्मुद्रापिताचविजयतेंतराम् ॥

बार्हस्पत्यमानरीत्याविश्वावसुनामसंवत्सरेमकरमासि संपन्ना

श्रीशिवमस्तु ।

# विषयसूचिका

ॐश्रीशिवमस्तु ।

# आत्मार्पणस्तुतिसव्याख्या ।

श्लो० । श्रीमद्दक्षिणकैलासपतिंसाम्बं शिवाप्तये । नौमिश्रीकण्ठविद्येशंतद्वाणीं नुतिरूपिणीम् ॥

व्या० । अथ श्रीताम्रपर्णीतटकुटीरब्रह्मनिष्ठगरिष्ठ श्रीमच्चिदम्बरानंदतीर्थगुरुवरचरणसरोज सेवापरायण श्रीकालहस्तिशरणशिवानंदनामायंयतिः श्रीमद्दीक्षितचरणविरचितात्मार्पणस्तवसुधार्णवं कचिल्लेलिहानः केवलमौत्सुक्येनदेहसम्बन्धाभिमानतश्चव्याचिख्यासु शिवाप्तयेस्वाभीप्सित देवस्मरणलक्षणं मङ्गलंउद्दिश्याह। श्रीमदक्षिणकैलासपतिमिति। श्रीमतिदक्षिणकैलासस्थले श्रीमदुत्तरकैलासयात्राशक्तानां मादृशानांभजनार्थं दययात्राविर्भूयभक्तान्पातीति श्रीमदाक्षिणकैलासपतिस्तंसाम्बं ज्ञानांबिकासमेतं शिवंस्वप्रकाशं शिवाप्तयेसकलकल्याणावाप्तयेनौमि॥ तथाश्रीकण्ठविद्येशं श्रीमद्दीक्षितचरणमित्यर्थः। तद्वाणींआत्मार्पणस्तुतिरूपिणींचनौमि ॥ नस्तुताविितिधातोः स्तौमिस्तुतिंकरोमीत्यर्थः। श्रीविद्येशदीक्षितयोः केनसंबंधेनैकत्वमित्येतत् उपरिसप्तमश्लोक व्याख्यायांविवरिष्यते तद्वाणींनौमीत्युक्त्यायथाकथंचिद्वचनै

स्तस्यास्तुतिमात्रस्यममाधिकारः नहितदर्थविवरणेइति ॥ एवं साम्बशिवविद्येशतद्वाणीनांस्तुतिकरणारम्भकत्वोक्त्यासर्वेगुरुवश्शब्दार्थ सरणिशरणास्संतुष्टामदुक्तिस्खालित्यदोषान् विस्मृत्यमामनुगृण्हन्त्वितिभावः ॥ अवतारिका ॥ सास्तुतिःकीदृशीत्यत्राह ॥

मू० ॥ कस्ते,बोद्धुंप्रभवतिपरं,देवदेवप्रभावं
यस्मादित्थं विविधरचनासृष्टिरेषाबभूव ॥
भक्तिग्राह्यस्त्वमिहतदपित्वामहं भक्तिमा
त्रात्स्तोतुंवाञ्छाम्यतिमहदिदं साहसंमे
सहस्व ॥ १ ॥

टी. हेदेवदेवदीव्यन्तीतिदेवाविष्णवादयः तेषामपिभासकत्वात् देवदेवः तथाचश्रुतिः ॥ तस्यभासासर्वमिदं विभातीति ॥ तेतवपरमुत्कृष्टं सर्वातिशायिनं प्रभावं महिमानं सुरनरादिषुकोवाचेतनोबोद्धुंबुद्धिवृत्त्याविषयीकर्तुं प्रभवतिशक्नोतिनकोपीत्यर्थः ॥ श्रुतिः ॥ देवाहवैस्वर्गंलोकमगमन् । तेदेवारुद्रमपृच्छन् कोभवानिति ॥ सोब्रवीदहमेकः प्रथममासंवर्तामिचभविष्यामिनान्यः कश्चनमत्तोव्यतिरिक्तइतिश्रुत्यातेषांविष्णवादीनामपि श्रीरुद्रपारमार्थिकरूपस्याविज्ञातत्वेसति त्वत्प्रभावविन्नकश्चिदस्तीतिभावः ॥ अपिच ॥ यस्मादेषासर्वजनदृग्विषयासृष्टिस्सर्गइत्थंविविधरचनासतीबभूवइत्थमिति रचनावैविध्यमेवाभिनीयदर्शयातियथामयूरसूकरादेर्वीर्यकणिकानानावैचित्र्यवर्णाविविधभावाश्च समुत्पद्यंतेइदमेवमहदिदंद्र

जालमित्युक्तं श्रीवसिष्ठेन ॥ एतस्मात्किमिवेंद्रजालमपरं यद्ग र्भवासस्थितंरेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुरं ॥ पर्या येणशिशुत्वयौवनजरा वेषैरनेकैर्वृतंपश्यत्यत्तिशृणोतिजिघ्रति तथागच्छत्यथागच्छ तीति ॥ एवंविधासृष्टिर्यस्मात् सर्वज्ञात् सर्वशक्तेः परमेश्वरात् बभूवतस्यतेप्रभावंपरं नकोपिबोद्धुमर्हती त्यर्थः ॥ तदपितथापित्वंभक्तिग्राह्योसि ॥ भक्तिःस्याद्भागसेव योरितिनानार्थरत्नकोशः ॥ भजसेवायामितिधातुः॥संततमा नससेवारूपयाभक्त्याग्राह्यःगृहीतुमवगंतुंशक्योसि॥तथाचेश्व रगीता॥ध्यानेनवृणुतेयोमांसर्वदाहंवृणोमितमिति॥भगवद्गीता च॥अनन्यचेताःसततंयोमांस्मरतिनित्यशः ॥ तस्याहंसुलभः पार्थनित्ययुक्तस्ययोगिनइति॥तस्मादहंत्वाम्भक्तिमात्रादत्रमा त्रशब्दप्रयोगः पुनर्वैदुष्यादिसाधनांतरव्यावृत्त्यर्थः।स्तोतुंवा ञ्छामियथाकथंचिदमृतत्वावाप्तयेशिवएवस्तोतव्योहि ॥ श्रु:॥ "कद्रुप्रचेतसेमहेवचोदेवायशस्यते तदिद्ध्यस्यवर्द्धनमिति ॥ अ स्याश्रुतेरर्थः ॥ रेजनाः कत्कदावा ॥ उ ॥ अनर्थकः ॥ प्रचे तसेप्रकृष्टज्ञानाप्तये ॥ महेदेवायमहतेदेवायमहादेवायेत्यर्थः॥ वचःस्तुतिरूपंशस्यतेकीर्त्यते ॥ तत्इत्हिअस्यपरमेश्वरस्यवर्द्ध नम्प्रियकरमित्यर्थः ॥ स्तुहिश्रुतंगर्तसदंयुवानमिति ॥ "कथ्यं काविंकल्पकंकामरूपंसंतुष्टुवांसोऽमृतत्वंभजंते ॥ इतिश्रुतिभ्यः कथंचित्स्तोतुंवांछामि ॥ ममेदमतिसाहसं स्तोतव्यस्यशिवम हिमलेशस्याप्यनवगम्यमानत्वेस्तोत्रारम्भणमिदमतिसाहस मे वतत्सहस्वक्षमस्वेत्यर्थः ॥ नन्वत्रस्तोत्रारम्भेभगवताश्रीमद्दी क्षितचरणेनापि ॥ अथनमस्वस्तिश्रीमुखशोभनपदप्रयोगाभा वाच्छिष्टाचारपरिप्राप्तस्वेष्टदेवतास्मरणलक्षणमङ्गलवचः कु-

तोनप्रयुज्यतइतिमाशंकिष्ठाः ॥ कइतिस्तोत्रारम्भवर्णतयासर्वा श्रेष्टदेवतास्संतुष्टाभवेयुरित्यभिप्रायः ॥ तथाहिनानार्थरत्नमालायां ॥ कोब्रह्मात्मानिलार्काग्निचित्तधीयमकेकिष्विति ॥ अत्रब्रह्मशब्देनाखण्डसच्चिदानंदंतत्पदलक्ष्यार्थं ब्रह्म वाच्यार्थेश्वरः वेदश्चापरम्ब्रह्मस्मृतं।आत्मशब्देनत्वंपदलक्ष्यार्थंप्रत्यकूचैतन्यंसर्ववृत्तिसाक्षिकम् त्वंपदवाच्यार्थआत्माच ॥ अनिलो महाबलप्रदोवायुस्संवर्गविद्याश्रयः ॥ अर्कःकर्मसाक्षीरविः अग्निःयागहोमसाधनः चित्तशब्देनसमष्ठ्यन्तःकरणं हिरण्यगर्भसंज्ञमासीत्धीर्बृहस्पतिः यमस्सर्वनियंताचेतिक इति वर्णोक्तैवसंस्मृताभवन्ति। नहीतोप्यन्यास्वाभीष्टदेवताश्शिष्यन्त इति श्रीकंठमतप्रतिष्ठापनाचार्यभावइत्यवगम्यते ॥ अन्वयः ॥ देवदेवतेपरंप्रभावमिहबोद्धुम्कःप्रभवति? यस्मादित्थंविविधरचनाएषासृष्टिर्विभूत्व तदपित्वमिहभक्तिग्राह्योसि ॥ ततस्त्वा महम्भक्तिमात्रात्स्तोतुंवाञ्छामि ॥ अतिमहदिदंमेसाहसं सहस्व ॥ १ ॥

मू०॥क्षित्यादीनामवयववतांनिश्चितंजन्मतावत्तन्नास्त्येवक्वचनकलितं कर्त्रधिष्ठानहीनम् ॥ नाधिष्ठातुंप्रभवतिजडोनाप्यनीशश्च भावस्तस्मादाद्यस्त्वमसिजगतीन्नाथजानेविधाता ॥ २ ॥

टी. क्षितीति ॥ क्षीयंतेनिवसंत्यस्यांसर्वइतिक्षितिः ॥ क्षि ॥ निवासगत्योरितिधातुः ॥ अवयवैतिमि श्रीभविती

त्यवयत्वः ॥ तद्वतांक्षित्यादीनांभूमिजलादीनांसावयवत्वात् तेषांजन्मतावन्निश्चितमेव।तज्जन्मचक्वचनलोकेशास्त्रेवाकर्त्रधिष्ठानहीनंकलितंनास्त्येव। यथाघटादिजन्मकंचित् कर्त्तारंकुलालादिम्मृदाद्यधिष्ठानंचविनानसंभवति ॥ तद्वत्कर्तारमधिष्ठानंचविनानक्वापिकलितमित्यर्थः ॥ यद्वाकर्त्ताचाधिष्ठानंचकर्त्रधिष्ठानेताभ्याम् विहीनंयस्मिन्कर्मणितद्यथाभवतितथाक्वचनकलितंनास्त्येवेत्यर्थः ॥ तर्हिजन्मरूपएवधर्मः कर्ताचाधिष्ठानंभवत्वितिचेन्न॥ स्वयंजडत्वात्जडस्योत्पत्तावन्योजड कर्ताभवेदित्येतत्वकवंधनकौशलंभवोद्धि तस्मात्जडस्यान्योजडस्स्वयंवानहिकर्ताभवितुमर्हति ॥ अथवाकश्चिच्चेतनोभावपदार्थःकर्ताभवतीतिचेन्न ॥ स्वकर्मफलभोगावश्यंभावित्वेनानीशत्वात् ॥ यथाघटादिकर्तातदुत्पादनध्वंसनस्वातंत्र्यवान्दृश्यते ॥ नंतादृशःकश्चिच्चेतनस्सकलभुवनतनुकरणादिसृष्ट्यादिसमर्थोदृयते ॥ तस्मादनीशोजीवभावश्चनकर्ताभवितुमर्हति ॥ मायापिजडत्वेननिरस्तासीत् ॥ तस्मात्पारिशेष्यादाद्यः सृष्टेःपूर्वमेवभवतीत्याद्यस्त्वमेवसकलजगतांविधातेतिजाने॥उत्पन्नस्योत् पादकपूर्वकत्वनियमादितिभावः ॥ अन्वयः ॥ नाथअवयववतांक्षित्यादीनांजन्मतावन्निश्चितम् तत्जन्मचक्वचनकर्त्रधिष्ठानहीनम् यथाभवातितथाकलितंनास्त्येव ॥ जडोधिष्ठातुंनप्रभवति ॥ अनीशोजीवभावश्चनप्रभवति तस्मात् पारिशेष्यात्त्वमेवसकलजगतांविधातेतिजाने ॥ अत्र प्रथमश्लोकमारभ्यद्विचत्वारिंशच्छलोकपर्यंतंमंदाक्रांतावृत्तमेवतल्लक्षणंतु ॥ मंदाक्रांताजलधिषडगैर्म्भौयतोतोगुरूचेदिति॥ मगणभगणौयगणतगणौ पुनस्तगणौद्वौगुरूचेत्मंदाक्रां

तेत्यर्थः ॥ २ ॥

मू०॥ इन्द्रम्मित्रंवरुणमनिलंपद्मजंविष्णुमीशं प्राहुस्तेतेपरमशिवतेमाययामोहितास्त्वाम् ॥ एतैस्सार्द्धंसकलमपियच्छक्तिलेशेसमाप्तंसत्वं देवश्श्रुतिषुविदितश्शंभुरित्यादिदेवः ॥ ३ ॥

टी. हेपरमशिवब्रह्मादिपंचतत्वमूर्त्युपास्य तेमाययामोहितास्तेकारणवादिनः ईशंसकलभुवनपंचकृत्यसमर्थंत्वां इन्द्रं परमैश्वर्यवन्तंस्वर्गाधिपंग्राम्यजनोराजकीयं राजानमिवसर्वकारणकारणमाहुः॥तथान्येमित्रमभिवर्षणातपादिनासर्व भूतेषुमेद्यतिस्निह्यतीतिमित्रं। मिदास्नेहने॥ तथावरुणंवृणोतिवरानमुम् लोकइतिवरुणंसर्वकारणमाहुः एवमनिलंपद्मजंविष्णुम्वाकारणमाहुः पारमार्थिकम्सर्वकारणंत्वद्रूपमनादृत्य तत्तदुपाधिप्राधान्येननिगदंतीतिभावः॥ यद्यपिइंद्रादिसर्ववैभवंपारमेश्वरमेव ॥ सर्वोवैरुद्रइत्यादिश्रुतिभिस्स्वामिभृत्यन्यायेनत्वत्कृतमेवेतिवादिनोनजानतइति अतस्तेतवमाययामोहिताइत्युक्तम्॥ अयंकारणवादश्श्रुत्यापीत्थंविकल्प्यते ॥ श्रुतिः ॥ ब्रह्मवादिनोवदंतिकिंकारणंब्रह्म । कुतस्मजाताजीवामकेनक्वचसंप्रतिष्ठा । कालस्स्वभावोनियतिर्यदृच्छाभूतानियोनिः पुरुषइतिचिंत्यम् । संयोगएषान्नत्वात्मभावादात्माप्यनीशस्सुखदुःखहेतोः । तेध्यानयोगानुगताअपश्यन् देवात्मशक्तिस्वगुणैर्निगूढामिति ॥ अस्याश्श्रुतेरर्थः । श्रीविद्यारण्याचार्यैर्वि

च्यते ॥ ऋतुकालेभवेत्गर्भोवर्षत्तौसस्यसंभवः ॥ उदाहृीयत
इत्यादिबहुधाकालवादिना ॥ स्वभाववाद्यग्निमुष्णंजलन्द्रव
मुदाहरत् ॥ रूपज्ञानंचक्षुषैवेत्याहुर्नियतिवादिनः ॥ धनिक
त्वाद्यव्यवस्थायदृच्छावादिनोच्यते ॥ भूतवादीदेहगतकाठि
न्यादीनुदाहरत् ॥ प्रधानवादीपुरुषान् सात्विकादीनुदाह
रत् ॥ मीमांसकाःकर्मवशाद्देवजन्मादुचदाहरन् ॥ सर्वत्रयु
क्तिदृष्टत्वात्किंतत्वमितिचिन्त्यते ॥ सर्वेषामनिवार्यत्वात्त
त्संघोस्त्वितिचेन्नतत् ॥ स्वतंत्रेचेतनेजीवेसतिकालाद्यचेतनाः॥
समप्रधानभावेनकथंसंघीभवन्तिते ॥ तर्हिजीवोहेतुरस्तुतन्नदुः
खादिदर्शनात् ॥ विद्याशक्तिमनिर्वाच्यामपश्यन्ध्यानयोगत
इति ॥ अत्रेदमनुमानं ॥ यथाविवादाध्यवसितंस्त्रीपुंनपुंसक
वाच्यंतनुकरणादिकार्यंजगत् सोपादानवत्कर्तृपूर्वकंकार्यत्वा
द्घटवदिति ॥ तथाचशिवज्ञानबोधे । स्त्रीपुंनपुंसकादित्वाज्ज
गतःकार्यदर्शनात् ॥ अस्तिकर्तासहस्त्वेसृजत्यस्मात्प्रभूर्हर
इति ॥ आगमान्तरितपौष्करे ॥ विवादाध्यासितंविश्वंवि
श्ववित्कर्तृपूर्वकम् ॥ कार्यत्वादनयोस्सिद्धंकार्यंकुम्भादिकंय
था ॥ अचेतनस्यमायादेःप्रवर्तकतयापतिः ॥ सिद्धस्सवार्थ
वित्कर्ताव्यापकस्सततोदितः ॥ धर्मेणसाध्यतेधर्मीकचित्का
र्येणकारणं ॥ कारणेनकचित्कार्यंकचिदाम्नायदर्शनात् ॥
ततःप्रथमसृष्टस्तुसमस्तोपाधिवर्जितः ॥ कर्तामहेशएवेष्टःप्रवृ
त्ताशेषशक्तिकः ॥ यथार्कोदिनचेष्टायांसन्निधेरुपकारकः ॥
तथासन्निधिमात्रेणविदधात्यखिलंशिव इति ॥ श्रीसूतश्च ॥
शिवात्सत्यपरानंदप्रकाशैकस्वलक्षणात् ॥ आविर्भूतमिदंसर्वं
चेतनाचेतनात्मकं ॥ सृष्ट्यर्थमैक्षतप्राज्ञाबहुस्यामितिशक्तिम

दिति ॥ प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधादितिब्रह्मसूत्राच्चशिव एवाभिन्ननिमित्तोपादानस्सर्वन्निर्म्मिमीतइतिसिद्धं ॥ तस्मात् त्वन्मायामोहिताएवविभिन्नंकारणं वदंतिपरमार्थतस्तुइन्द्रमित्रकालादिकारणैरेतैस्सार्द्धंसकलजगत्सृष्ट्यादिकार्यंयच्छक्तिलेशेयस्यतेशक्तीनांवामाज्येष्ठेच्छाद्यानांमध्येकस्याश्चिच्छक्तेर्लेशेकटाक्षमात्रेसमाप्तंकृतंभवति सतादृशोदेवस्त्वंशम्भुरितिआदिदेवइतिश्रुतिषु अथर्वशिखाद्यासुविदितः ॥ श्रुति ॥ सर्वमिदम्ब्रह्मविष्णुरुद्रेंद्रास्तेसम्प्रसूयंते सर्वाणिचेंद्रियाणिचसहभुतैः॥नकारणङ्कारणानांधाताध्याताकारणंतुध्येयः सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्यइति ॥ एवंबहुश्रुतिबलाच्छंभुरेवसर्वङ्कारणमितिनिश्चीयते ॥ अन्वयः ॥ तेमाययामोहितास्तेवादिनः ईशंत्वांइन्द्रम्मित्रम्वरुणं अनिलम्पद्मजम्विष्णुञ्चाहुः ॥ सकलमप्येतैस्साकम्यच्छक्तिलेशेसमाप्तं ॥ सदेवस्त्वंश्रुतिषुशम्भुरिति आदिदेवइतिचविदितः ॥ ३ ॥

मू० ॥ आनंदाब्धेःकमपिचघनीभावमास्थायरूपं शक्त्यासार्द्धंपरममुमयाशाश्वतंभोगमिच्छन् ॥ अध्वातीते,शुचि,दिवसकृत्कोटिदीप्रे,कपर्दिन्,आद्येस्थाने,विहरासिसदासेव्यमानोगणेशैः ॥ ४ ॥

टी. एवंस्वप्रधानेनोपास्यंत्वांअप्रधानेनेंद्रामित्रादिरूपेण वदंतीत्युक्तम् तत्परमार्थपराशिवरूपङ्कीदृक्कुत्रवाविभातीत्यत आहआनंदेति ॥ हेकपर्दिन् कंशिरःपिपर्तिपूरयतीतिकपर्दः

ऽस्यास्तीतिकपर्दी॥प्र॥ पालनपूरणयोः कस्यवाजटानिष्ठ
गाजलस्यपूरेणजगद्दायतेशुद्धीकुरुतेइतिवाकपर्दीत्यर्थः॥ दै
प् शोधनेभुवनपावनजटाधारिन्नित्यर्थः त्वंआनंदाब्धेः आनंद
एवापस्सुधास्तासांनिधेः पूर्णानंदात्मकस्यब्रह्मणः कमपिघनी
भावं रूपङ्कमपीत्युक्त्याइदमित्थमितिनिरूपयितुमशक्यमिति
भाव॥पुनःकिंरूपमितिचेत्स्वरूपेणवक्तुमशक्यमापिजात्यंधस्य
कस्यचित् क्षीरलक्षणोपदेशवत्शास्त्रेणकेवलङ्किमपिकथंचित्
उच्यते॥ गिरिनिर्झरशरद्घनकौमुदीतुहिनघनीभाववत् सुमु
कुरोदरप्रतीयमानप्रतिबिंबवच्चकिमप्यनिर्वचनीयं रूपंउमया
प्रणवरूपिण्यानिजशक्त्यासार्द्धमास्थाय प्राप्यशाश्वतम्ब्रह्मा
दुयत्पत्तिलयावधिकम्परमुत्कृष्टञ्च विषयभोगवद्दुःखशिरस्क
मित्यर्थः ॥ उमामहेश्वरसंवादरूपतत्वोपदेशभोगमिच्छन्
सार्वभौमचतुरङ्गादिलीलावत्ब्रह्मादिकञ्जगत्सृष्ट्वातदनुप्रविश्य
सेव्यसेवकनियन्तृ नियम्यभावतश्चभोगमिच्छन्नित्यर्थः ॥
श्रुति॥ सएवमायापरिमोहितात्माशरीरमास्थायकरोतिसर्वं॥
स्त्र्यन्नपानादिविचित्रभोगैस्सएवजाग्रत्परितृप्तिमेतीति ॥ वि
ज्ञानकलप्रलयाकल सकलभेदनवर्त्तमानसकलभुवनतदधिपा
राधनम्भोगमिच्छन्नित्यर्थः॥ एवंकुत्रसभायांविहरतीत्यत्राह॥
अध्वातीतेशुचिदिवसकृत्कोटिदीप्रेआद्येस्थाने ॥ मलयेस्था
नादिसर्वविकाराभावात्पुन स्सर्गादौपरमेश्वरेच्छयापराशिव
लोकविकारआदौभवतीतिआद्यंस्थानन्तस्मिन्स्थानेगणेशैस्से
व्यमानस्सन् विहरसीत्यर्थः॥अत्राध्वातीतेइत्युक्त्यावाङ्मनोऽ
गोचरङ्किमपिस्थानङ्गम्यते ॥ तत्रकेवा अध्वानइत्यत्रक्ष्मातत्वा
द्युपरिस्थानविशेषाइवगण्यन्ते ॥ किरणागमे॥ वर्णाध्वा

चपदाध्वाचमन्त्राध्वाभुवनाध्वकः ॥ तत्वाध्वाचकलाध्वाचष
डध्वानंइमेमताइति ॥ इमेषडध्वानस्तुवक्ष्यमाणाष्टादशतत्व
परिमाणगताइत्यतस्तदिदमुच्यते ॥ सिद्धांतसारे ॥ क्ष्मातत्वं
शतकोटियोजनमपःप्रारभ्यगौणांतकम्पंक्त्यातद्गणनात्तथाप्रकृ
तितोमायावसानंशतात् ॥ साहस्राच्चसदाशिवावधिततं
श्शक्त्यंततोलक्षतस्स्यादूर्ध्वंसशिवोप्यमेयविभवो बिंदोरधिष्ठा
यकः इति ॥ अस्यार्थः आदौक्ष्मातत्वविस्तारोच्छ्रायमानंश
तकोटियोजनमिदमेवब्रह्मांडमानं ॥ अप्तत्वमारभ्यगुणतत्वा
वधिदशदशभागगणनात्अप्तत्वम् सहस्रकोटियोजनं॥तेजस्त
त्वंदशसहस्रकोटियोजनं॥वायुतत्वं शतसहस्रकोटियोजनं॥आ
काशतत्वंदशशतसहस्रकोटिकं॥अहङ्कारङ्कोटिसहस्रकोटिकं ॥
पश्चाच्छतभागगणनात् गुणतत्वंशतकोटिसहस्रकोटिकं॥गुणस्य
शतभागाधिकाप्रकृतिः पद्मसंख्यावती॥तच्छतगुणितोरागोनि
खर्वमानः ॥ तच्छतगुणितानियतिः महापद्मसंख्या ॥ तच्छत
गुणितंविद्यातत्वं महाशङ्खसंख्यं ॥ तच्छतगुणितङ्कलातत्वम्म
हासमुद्रकम् ॥ तच्छतगुणित ङ्कालतत्व म्परार्द्धसंख्यं ॥ पश्चा
त्सहस्रभागवृद्धेः मायातत्वपरिमाणं तत्सहस्राधिकम् ॥ शुद्ध
विद्यातत्वम् तत्सहस्रभागाधिकं ॥ महेश्वरतत्वं तत्सहस्रभा
गाधिकं ॥ सदाशिवतत्वम् तत्सहस्रभागाधिकम्॥ शक्तितत्वं
तल्लक्षभागाधिकम् ॥ एवम्परार्द्धादुपरिसंख्याभावात् तत्तद्गु
णितसंख्यैवोक्ता ॥ एवमष्टादशतत्वमानमुक्त्वातदुपर्य्यमेयवि
भवः अपरिमितमहावैभवः परशिवलोकेनामरूपात्मकप्रपञ्च
स्यपरस्यबिंदोरप्यधिष्ठानतयादेवोभगवान्विभासतइत्यर्थः ॥
तत्रागमेप्रासादमन्त्रोद्धारोअकारश्चाप्युकारश्चमकारोबिंदुरेवच।

अर्द्धचन्द्रनिरोधीचनादोनादांतएवच ॥ शक्तिश्चव्यापिनीचैव समनाचोन्मनामता ॥ समनान्तम्पाशजालमुन्मन्यंतेपराश्शिवइति॥इदमेवद्वादशान्तपदमित्युच्यतेशिवयोगिभिः॥शक्त्यादिशक्त्यन्तशिवासनस्थानमानश्चैतदेवेत्यर्थः ॥ एवमुक्तान्येतानि तत्वानिशिवपदप्रेप्सुभिरुपसंक्रमितव्यत्वेनाध्वानइत्युच्यंते ॥ अथाध्वप्रकारभेदः ॥ मन्त्राध्वाचपदाध्वाचवर्णाध्वाभुवनाध्वकः॥ तत्वाध्वाचकलाध्वाचषडध्वानइमेमताः ॥ इतिषडध्वनांमध्येमन्त्राध्वस्वरूपमिदमुच्यते॥ शिवेशान अस्त्रम् ॥ तत्पुरुष कवचम् ॥ अघोर शिखा ॥ वामदेव शिरः ॥ सद्योजातहृदयं इतिपञ्चमन्त्राः॥ अथपदाध्वस्वरूपमुच्यते॥ॐएकम् व्योमव्यापिन्नित्यादिनित्ययोगिनइत्यन्तमेकादशपदानि॥ ध्यानहारायेत्यादिव्योमव्यापिन्नित्यन्तंविंशतिपदानि ॥ अरूपिन्नित्यादिमहेश्वरेत्यन्तानिएकाविंशतिपदानि ॥ महादेवेत्यादिशिवाय नमोनम ॐमित्यन्तम् षट्त्रिंशत्पदानि ॥ आहत्यपदान्यष्टाशीतिः ॥ अथवर्णाध्वस्वरूपं॥ अकारादिस्वराष्षोडश ॥ कादित्रीणि॥घादिञान्तंसप्तटतपवर्गादिळान्तंचतुर्विंशत्यक्षराणि क्षमित्येकम् आहत्यवर्णस्थानानिपञ्चाशत्॥ अथभुवनाध्वस्वरूपम् ॥ अनाश्रितादिनिवृत्त्यन्तानिपञ्चदशभुवनानि॥ सादाख्यादिवामांतान्यष्टादशभुवनानि अंगुष्ठमात्रादिभीमवामान्तानिसप्तविंशतिभुवनानि॥ श्रीकण्ठाद्यमरेशान्तानिषट्पञ्चाशत् भुवनानि ॥ अण्डाद्बहिर्वीरभद्रभद्रकाल्यादिकालाग्निरुद्रान्ता ष्टोत्तरशतभुवनानि ॥ आहत्यचतुर्विंशत्युत्तरद्विशतभुवना न्यासन् ॥ अथतत्वाध्वस्वरूपमुच्यते ॥ शिवतत्वंशक्तितत्वन्द्वे ॥ सदाशिवेश्वरशुद्धविद्याख्यानिपदानित्रीणि ॥ मायादिपुरुषां

तानिपदानिसप्त ॥ प्रकृत्यादिअप्तत्वान्तत्रयोविंशतितत्वा
नि ॥ पृथिवीएका आहत्यतत्वाध्वस्थानानिषट्त्रिंशत् ॥
अथकलाध्वस्वरूपमुच्यते ॥ शांत्यतीतकलायांअनाश्रितादि
निवृत्यन्तम्पंचदशभुवनानि शांतिकलायांसदाशिवादिवामा
न्ताष्टादशस्थानानि ॥ विद्याकलायांअंगुष्ठमात्रादिवामान्तस
प्तविंशतिस्थानानि ॥ प्रतिष्ठाकलायांश्रीकण्ठाद्यमरेशांतानिष
ट्पञ्चाशत्स्थानानि ॥ निवृत्तिकलायां महाकाल्यादिकालाग्नि
रुद्रान्ताष्टोत्तरशतभुवनानि ॥ इहापिचतुर्विंशत्युत्तरद्विशतभुव
नान्यासन् ॥ एवंमन्त्रान्पदाध्वसु ॥ पदानिवर्णाध्वसु ॥ ता
न्भुवनेषु ॥ तानितत्वेषु ॥ तानिचकलासु ॥ विलाप्यच
ताश्चस्वात्मना सहशुद्धशिवे अखण्डाकाशरूपेसर्वव्यापिनिषडध्व
नांपारेविराजमानेयत्रसदागणेशैर्विहरसि ॥ अथवामूलाधा
रस्वाधिष्टानमणिपूरानाहतविशुद्धाज्ञास्थानानिषडध्वानः ॥ त
परिब्रह्मरंध्रेआद्यस्थानेपिंडोत्पत्तौशिरसआदिमत्वात् आद्येस्थ.
नेद्वादशांतपदे ॥ गणैःगण्यन्तेइतिगणाःपंचप्राणमनोबुद्धिदशेंद्रि
याणितैस्सेव्यमानस्सन्सदाविहरसीति। अनध्वगाअध्वसुपार
इष्णवइतिसोध्वनःपारमाप्नोतीत्यादिश्रुतीनामयमेवार्थः एत
त्सर्वमनसिनिधायभगवतीश्रुतिः ब्रह्मचार्यभ्यर्थनयासंग्रहेणाह
॥श्रुति॥ अध्वना मध्वपतेश्रेष्ठस्याध्वनः पारमशीय॥ अध्वनामध्व
पतेस्वस्तिमासम्पारय॥इतिचअनयोरर्थः ॥ अध्वनांगर्भनरकसं
सारमार्गाणांदक्षिणोत्तरमार्गाणां वाअध्वपतेमार्गबन्धो श्रेष्ठस्य
पुनरावृत्तिशून्यस्यअध्वनः पारम्पर्यंतमशीयअश्नुवीय॥पुनः
अध्वनामध्वपतइतिगोवृषभकरिकलभादिशब्दवत् प्रयुज्यते ॥
अध्वपतेसूर्यांतर्यामिन् अध्वगामिनः प्राणिनः स्वोदयप्रकाश

दानेन राषाणकण्टककर्दमपतनेभ्यः पातीत्यध्वपातेस्सूर्यः तस्या प्य स्वातंत्र्यात् अंतर्यामिणापरमेश्वरेणसूत्रधारिणेवपुत्तलिकादेः प्रेर्यमाणत्वादंतर्याम्येवात्रविषयः ॥ सर्वाध्वतारकत्वमन्त्रलिंगात् सौरमण्डलमध्यवर्त्तिद्वादशसूर्य पुरुषांतर्यामिन्नित्यर्थः । स्वस्तिपरमश्रेयोमोक्षमङ्गलं यथाभवतितथा मा ॥ मां ॥ सम्पारयासम्यक्पारंनय ॥ सर्वसंसारशोकनिवृत्तिपदंनयप्रापय ॥ अथैवम्भूतेअध्वनांपारे आद्येस्थानेपराशिवपुरेयत्रसदागणेशैर्विहरासितत्पदंनयेतिवाक्यार्थः ॥ एवमरूपस्यापिपरमेश्वरस्यस्वजनानुग्रहार्थंस्वीकृतलीलाविग्रहसद्भावश्शास्त्रेषुव्यञ्जितएव॥उक्तं श्रीमत्ब्रह्मानंदैः॥ बहुशास्त्रमधीत्यापिगुरुकारुण्यवर्जिताः ॥ शिवस्यमूर्त्तिवार्तामप्यहोजानंतिनैवहीति ॥ श्रीपराशरश्च । अरूपस्यापिब्रह्मणः किमपिरूपमस्तीतिशिवविदभिमतमुदीर्यपुनराह ॥ निष्कलेतुपरेतत्वेनिरालंबेनिरञ्जने॥ किंकरोतिजनः क्षुद्रस्तत्स्मान्नित्यमाश्रयेत् ॥ ज्ञानावलम्बनभ्रांत्यामनुष्यामंदबुद्धयः ॥ मूर्त्युपेक्षांप्रकुर्वंतिज्ञानंतेषांनजायतइति ॥ तस्मात् अनिर्वाच्यम्स्वानुभवैकवेद्यम्किमपिब्रह्मरूपंसर्वोत्तरस्थानेविहरतीतिभावः ॥ अन्वयः ॥ कपर्दिन्त्वं आनंदाब्धेः किमपिघनीभावंरूपमास्थाय उमयाशक्त्यासार्द्धं परमंशाश्वतंभोगमिच्छन् अध्वातीतेशुचिदिवसकृत्कोटिदीप्रेचाद्येस्थानेसदागणेशैः स्सेव्यमानोविहरासि ॥ ४ ॥

मू० ॥ त्वंवेदान्तैर्विविधमहिमागीयसेविश्वनेतस्त्वंविप्राद्यैर्वरदनिखिलैरिज्यसेकर्मभिस्स्वैः ॥

त्वन्दृष्टानुश्रविकविषयानंदमात्रा
वितृष्णैरंतर्ग्रन्थिप्रविलयकृतेचि
न्त्यसेयोगिवृन्दैः ॥ ५ ॥

टी. उन्मनांतसकलभुवनातीतसोमलोकाख्य परशिवपुरे भगवान्विहरतीत्युक्तम् ॥ अत्युच्छ्रायदेशविलासिनोदेवस्यस र्वाधोभुवनवर्तिनामस्माकञ्च कथमुपास्योपासकत्वधर्म्मस्सेत्स्य ति ॥ तस्योपास्यत्वेकिंमानङ्कतिविधावोपासकाइत्यतआह ॥ त्वमिति ॥ विश्वनेतःविश्वंसर्वजनंतत्तत्कर्मानुसारेण नयतीति विश्वनेता ॥ तत्रप्रमाणमंतर्यामिब्राह्मणंहेविश्वनेतस्त्वंवेदांतैः वेदानामंताउपनिषदःताभिस्तदुक्तवाणीभिर्विविधोमहिमास्या स्तीतिविविधमहिमा ॥ तथाचश्रुतिगिरः॥ यदापश्यः पश्यंत रुक्मवर्णकर्त्तारमीशम्पुरुषंब्रह्मयोनिं। तदाविद्वान्पुण्यपापेविधू यनिरञ्जनः परमंसाम्यमुपैतीति ॥ शांतंशिवमद्वैतं ॥ प्रणवंही श्वरंविद्यात्सर्वस्यहृदयेस्थितं ॥ द्वैतस्योपशमश्शिवः ॥ नस न्नचासच्छिवएवकेवलइत्यादिश्रुतिभिश्शिवमात्रास्तित्व वेद योनित्वाद्वैतत्वप्रणवाभिन्नत्वाव्ययत्वाद्यपदानैर्विविधमहिमा- गीयसेस्तूयसे ॥ हेवरदभक्तानामीप्सितान्वरांददातीति रद ॥ त्वंविप्राद्यैर्विशेषतःपापेभ्यःआत्मानंपरञ्चपांतीति भ्राःतेआदौएषांतैःक्षत्रियादिभिर्निखिलैस्स्वैस्स्वैस्स्वोचित... भिः॥ तद्यथावसंतेब्राह्मणमुपनयीतग्रीष्मेराजन्यंशरदिवैश्यमि ति॥गर्भाष्टमेब्राह्मणंगर्भैकादशेराजन्यं॥ भवत्पूर्वंचरेत्भैक्षंद्वि वर्णादिनेदिने ॥ भवन्मध्यंतुराजन्योवैश्यस्तुभवदुत्तरमिति॥ क्वचिच्छाखाभेदेन॥ उदितेजुहोतिअनुदितेजुहोतीतिविकल्प

॥ श्रुति ॥ उभयमेवाग्नेयंस्यात्उदितेसूर्येप्रातर्जुहोतिप्रत्येवते नतिष्ठति यदनुदितेसूर्येप्रातर्जुहुयात् यथातिथयेप्रद्रुतायशून्या यावसथायाहार्यंहरन्तितादृगेवतत् इतिवचनानिनाहिनिंदान्या येनतत्तत्पक्षोपोद्बलकानिभवेयुः तत्रनिरुक्तिकाराश्च प्रातः प्रा तरनृतंतेवदान्तिपुरोदयाज्जुह्वतियेग्निहोत्रंदिवाकीर्त्यमदिवाकी र्त्यंतस्सूर्योज्योतिर्हिनतथेतरेषामिति शास्त्रसिद्धस्सर्वोप्यधि कारिभेदेनविधिरेवेत्यर्थः ॥ तस्मात्ब्राह्मणमुखैर्निखिलैस्स्वैः कर्मभिरिज्यसेसमाराध्यसेइत्यर्थः ॥ किंचत्वंदृष्टानुश्रविक विषयानंद मात्रावितृष्णैः दृष्टविषयाऽन्नपानमंचतूलिकाभवन शयन धनसंतानभूषणस्रक्चंदनवनिताद्याः ॥ आनुश्रविक विषयाःगुरुशास्त्राण्यनुसृत्यश्रूयमाणाः कल्पद्रुकामधेनुचिंताम ण्यप्सरस्सुधासम्पन्नस्वर्गादिपदविभवाः ॥ इंद्रियार्थाविषया स्तेषुयआनंदस्सुखातिशयः पूर्वपूर्ववासनयाप्राणिनांउत्पद्य ते ॥ तथाचोक्तंश्रीसूतेन ॥ ऐहिकानिन्द्रियैरर्थान्भुंक्तेदेही निरन्तरम् ॥ पुनर्भुक्तेषुचार्थेषुतत्समानेषुमानवः ॥ करोति वाञ्छामवशःकल्पनामतिमोहितः॥ शोभनत्वेनयःक्लृप्तःपदार्थः पारलौकिकः ॥ तत्रबुद्धिंनृणांशास्त्रमुत्पादयतिनिश्चिताम् ॥ भ्रमात्तद्भोगवाञ्छाचजायतेसर्वदेहिनाम् ॥ दृष्टानुश्रविकद्वारा बुद्धिसंततिरात्मनाम् ॥ कल्पितेविषयेनित्यंजायतेवेदवित्त माइति॥एवंभूतस्योभयविधस्यविषयानंदस्यमात्रायालेशादपि येवितृष्णाः ॥ तृष ॥ पिपासायामिच्छायाञ्च ॥ विषयानं दलेशादपिविगतातृष्णायेषान्तैर्दृष्टानुश्रविकविषयानन्द मात्रा वितृष्णैःयोगिबृन्दैःशिवध्यायिनां समूहैःअन्तर्ग्रन्थिप्रविलय कृते ॥ अंतश्शरीरान्तरालेमूलाधारमणिपूराज्ञाधारास्थिता

ग्रन्थयस्त्रयः पक्षिनीडवल्लताग्रहवच्चबहुजन्मनानावासनाभारितनाडीपुंजग्रथनरूपास्तेषांप्रविलयकृतेग्रंथित्रयस्यात्यन्तिकाविनाशायेत्यर्थः ॥ उक्तंहिसहस्रनामस्तवे ॥ मूलाधाराम्बुजारूढाब्रह्मग्रन्थिविभेदिनी ॥ मणिपूरान्तरगताविष्णुग्रन्थिविभेदिनी । आज्ञाचक्रान्तरालस्थारुद्रग्रन्थिविभेदिनी ॥ इतिग्रन्थिभेदमृतेमुक्तेर्मार्गान्तरन्नास्तीतिश्रुतिः ॥ यदासर्वेप्रभिद्यन्तेहृदयस्येहग्रन्थयः ॥ अथमर्त्योमृतोभवत्येतावदनुशासनमिति ॥ तस्मादन्तर्ग्रन्थिप्रविलयकृते ॥ निमित्तंयोगिभिश्चिन्त्यसेध्येयोभवसीत्यर्थः ॥ ध्यै ॥ चिंतायामितिधातुः ॥ अन्वयः ॥ विश्वनेतस्त्वंवेदांतैर्विविधमहिमागीयसे ॥ वरदविप्राद्यैर्निखिलैःस्वैःकर्मभिरिज्यसे ॥ त्वंदृष्टानुश्रविकविषयानंदमात्रावितृष्णैर्योगिभिरंतर्ग्रंथिप्रविलयकृतेचिंत्यसे ॥ उल्लेखालंकारः ॥ ८ ॥

मू० ॥ ध्यायंतस्त्वांकतिचनभवन्दुस्तरंनिस्तरंतित्वत्पादाब्जंविधिवदितरेनित्यमाराधयंतः ॥ अन्येवर्णाश्रमविधिरताः पालयंतस्त्वदाज्ञांसर्वंहित्वाभवजलनिधावेषमज्जामिघोरे ॥ ९

टी० नन्वेवमधिकारिभिः किंफलंलभ्यतइत्यत्राह ॥ ध्यायंतइति ॥ हेभगवन्कतिचनभाग्यवंतस्त्वां ॥ श्रु ॥ शिवएकोध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्योतिश्रुतेर्विश्वस्य विज्ञा

तीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहीकरण रूपयासुचि
रसंस्कृतयासमुन्मन्याधीवृत्यानिश्चलदारु शिलाकल्पास्थित्या
चप्रतिपदमापूर्णिमाख्यासुदृष्टिष्वेकतमायान्निश्चलतारयाचत्वा
मेवध्यायंतस्संतः ॥ तत्रप्रत्ययैकताननताध्यानमितिपातञ्जलंसू
त्रं ॥ तेत्वद्ध्यनपराःदुस्तरंदुःखेनापितर्तुमशक्यंभवजल
धिंगोखुरवन्निस्तरन्तिलंघयन्ति ॥ इतरेध्यानयोगास्थिर
मानसास्तु ॥ अज्ञातशिवतत्वानामाकाराद्यर्चनंस्मृतं ॥ यो
जनाध्वन्यशक्तस्यक्रोशाध्वापरिगण्यत इतिश्रीवासिष्ठवचनानु
सारेणत्वत्पादाब्जंमहालिंगादित्वदधिकरणमित्यर्थः ॥ नि
त्यमहरहःदिनशून्यंविनैवाराधयन्तः विधिवत्शास्त्रानुसारेण
नित्यमर्चयन्तस्सन्तः ॥ श्रु ॥ शिवलिंङ्गंत्रिसंध्यमहरहरभ्य
र्चयेदिति ॥ अथातोमहादेवस्याहरहःपरिचर्याविधिंव्या
ख्यास्यामः ॥ स्नात्वाशुचौदेशेगोचर्ममात्रंगोमयेनोपलिप्येत्या
दिश्रुतिसूत्रविधिनाराधयन्तश्चदुस्तरंभवंनिस्तरान्ति ॥ अन्ये
लिंगोपासनेपिप्रतिबंधकबाहुल्येनालिंगार्चनश्रद्धाविहीनावर्णा
श्रमविधिरताः ॥ श्रु. ॥ मंत्रेषुकर्माणिकवयोयान्यपश्यन्
तानित्रेतायांबहुधासंततानि ॥ तान्याचरथनियतंसत्यकामा
एषवःपंथास्सुकृतस्यलोके इतिश्रुतिबलात्विविधयागकृच्छ्रा
चारस्वाध्यायश्राद्धतर्पणादिनियमपराः वेदतदनुसारिस्मृति
पुराणरूपांत्वदाज्ञांपालयन्तस्सन्तः क्रमाद्दुस्तरमापिभवाब्धिं
निस्तरंति ॥ तएतेत्रिविधाधिकारिणोपित्वदाज्ञापालकत
याकथमपिभवजलधिंसंतरेयुरे वयद्यपितारतम्यमस्तुनाम अ
त्राहमेकएवदुस्तरभवनिस्तरणदृढोपायभूतशिवध्यानतदर्चनत
दुदितधर्माचारादिकमखिलंबुद्धिपूर्वकंत्यक्त्वा ॥ घोरे ॥ घो

रंभीमंभयानकमिति ॥ नि ॥ घुरभीमार्थशब्दयोरितिधातुः॥ पुत्रमित्रकलत्रादिहानिवृद्धिव्यतिकरहाहाक्रंदनतरंगघोषेकामाद्यरिषड्वर्गदुष्टयादोनिरंतरेअपारेघोरेभवजलधौमज्जामि ॥ यथामहाहृदमग्नोजनः इंद्रियमनोवैकल्येनहिताहितंनजानाति ज्ञात्वापितदाहितकृत्भवितुंनशक्नोतितद्वत् संसारसमुद्रएवमज्जामीत्यर्थः ॥ कतिचनभाग्यवन्तस्त्वांध्यायन्तःदुस्तरं भवंनिस्तरंति ॥ इतरेत्वत्पादाब्जंविधिवन्नित्यमाराधयंतस्संतोदुस्तरंभवंनिस्तरंति अन्येवर्णाश्रमविधिरतास्त्वदाज्ञांपालयन्तोदुस्तरं भवंनिस्तरंति ॥ अत्रनिस्तरंतीतिक्रियापदम् त्रिविधाधिकारिष्वप्युक्तम् तथापिध्यानपराणामेवमुख्यतया क्रमादन्येषाञ्चान्वेतितस्मात् स्वाधिकारादुपर्युपरिध्यानपदं गत्वाभवंतरन्तीतिभावः ॥ ६ ॥

मू०॥ उत्पद्यापिस्मरहरमहत्युत्तमानां कुलेस्मिन्नास्वाद्यत्वन्महिमजलधेरप्यहं शीकराणून् ॥ त्वत्पादार्चाविमुखहृदयश्चापलादिन्द्रियाणां व्यग्रस्तुच्छेष्वहहजननं व्यर्थयाम्येषपापः ॥ ७ ॥

टी. नन्वेवंसकलमार्गिणामीश्वरप्रसादेसातितवजन्मनः सफलीकरणेशिवाराधनेकः प्रतिबंधइतिचेन्नप्रत्यक्षतः काश्चित्तथापिमन्मनस्तोदकः कश्चित्बलीयानित्याह ॥ हेस्मरहर अत्रमहतीतिविशेषणेनअस्मिन् कुलेश्रीशिवांशविद्येश्वरावतारस्सूच्यते ॥ तथाचश्रीनीलकण्ठमखिनः ॥ कृतदीक्षोऽघोर

मुखे कुलकूटस्थो भरद्वाजः ॥ विद्येश्वरेषु कश्चन पितामहो न इति विस्रम्भ इति ॥ कश्चनेत्यनिर्धारितमर्थमन्यत्र स्पष्टीचक्रुः ॥ श्रीकण्ठो वततार यस्य वपुषा कक्ष्यात्मनेवाच्युतः श्रीमानप्पयदीक्षितस्स जयति श्रीकंण्ठविद्यागुरुरिति ॥ ज्योतिर्विदस्त्वेवमाहुः ॥ वीणातत्वज्ञसंख्यालसितकलिसमाभाक्प्रमातीचवर्षे कन्यामासे तु कृष्णप्रथमतिथियुतेप्युत्तरप्रोष्ठपाद्धे ॥ कन्यालग्नेऽद्रिकन्यापतिरमितदयाशेवधिर्वैदिकेषु श्रीगौर्य्यैप्राग्यथाहस्म समजनि विरिंचीशपुर्याम् कलेशः ॥ अर्थः ॥ वीणातत्वज्ञेति पंचाक्षराणि तत्र ज्ञकारोऽनर्थकः, प्रातिलोम्येन तयुक्तवकारस्य चतुस्सहस्रसंख्या ॥ केवलतकारस्य षट्शतं ॥ णा ॥ पंचाशत् ॥ वी ॥ चतुस्संख्या ॥ आहत्य चतुःपंचाशत् 4654
संयुतषट्शतोत्तरचतुस्सहस्रसंख्याके कल्यब्दे प्रमातीचवर्षे कन्यामासे कृष्णपक्षे प्रथमातिथौ उत्तरप्रोष्ठपदनक्षत्र कन्यालग्ने श्रीकलेशः श्रीशिवावरणस्याष्टविद्येश्वराणां मध्ये सप्तमस्थानाधिप श्रीकण्ठविद्येश्वर इत्यर्थः ॥ प्राक्कल्पान्तरे श्रीपरमेश्वरो वैदिकेष्वमितदयाशेवधिस्सन् श्रीगौरीदेव्यै यथाह स्म अवादीत् तथैव विरिंचीशपुर्यां विरिंचिपुरे समजनि संजात इत्यर्थः ॥ यद्यपि श्रीमद्दीक्षितचरणस्य पितृपितामहपरम्परायावासस्थानम् आरणिसमीपवर्त्ति अडयप्पलमित्यग्रहार एव ॥ तथाप्यस्य विरिंचिपुरे मातुलमंदिरमासीदिति किंवदन्त्यावगम्यते जन्मापि तत्रेति पर्य्यवस्यति ॥ श्रीशिवोपदेशसूक्तिरुत्तरत्र विवरिष्यते तेषां जन्मलग्नस्थितिस्तु ॥ लग्ने रवींदुसुतयोर्मकरे च मांदौ मीने शशिन्यथ वृषे रविजे स्वराहौ ॥ चापे गुरौ क्षितिसुते मिथुने तुलायां शुक्रे शिखिन्यलिगते शुभलग्न एवं ॥ एवंभूते शुभलग्ने श्रीकण्ठ

विघ्रेशउक्तरीत्याविरिंचिपुरेमातुलग्रहेसमजनीति पूर्वेणसंबध्य ते ।। तथाचश्रीशिवसूक्तिः ।। शिवरहस्येनवमांशेअष्टमाध्याये कलिविशेषकथने श्रीभगवत् पादाद्यवतारसूक्तिः ।। म्लेच्छाचारपरास्सर्वेदरिद्राश्चाद्विजातयः ।। भविष्यंत्यल्पमतयो यतिस्तत्रभविष्यति ।। शिवेमदंशसंभूतश्शंकरश्शाङ्करोत्तमः।। चतुर्भिस्सहशिष्यैश्चकलाववतरिष्यति ।। तस्मैचोपनिषद्विद्या मयादत्तामहेश्वरि ।। भूमौपाषण्डषण्डानांखण्डनंसकरिष्यति ।। कलावेवमहादेविहरदत्ताभिधोद्विजः ।। अशैवदंडनार्थाय भविष्यतिमहीतले ।। दीक्षितोपिभवेत्कश्चिन्मदंशोभूसुरोम्बिके ।। भासुराचारनिरतश्शैवच्छंदोगवंशजः ।। शैवशास्त्रंतदा भूमौलुप्तंविस्तारयिष्यति ।। अन्येपिभक्तादेवेशिचेरेचोलेच पांड्यके।। भविष्यंतिमहाभक्तामयिसर्वासुजातिषु।। सुंदरोज्ञानसंबंधस्तथामाणिक्यवाचकः।।तेषुमुख्यास्त्रयोप्येतेइत्यादिमपंच्यते।। तस्माच्छिवांशावतारहेतुकतयामहतीतिविशेषणंयुक्तमित्यर्थः ।। किंचउत्तमानामुत्कृष्टतमानां श्रीरंगराजयज्वप्रभृतिक गोत्रर्षिपर्यंतानां श्रौतकर्मानुष्ठानवरिष्ठानांशिवैकशरणानामस्मिन्कुलेकुश्यतेसंस्त्यायतेअनेनेतिकुलंतस्मिन्अस्मिन्नित्याभिनीय्यनिर्देशेनबीजक्षेत्रसांकर्यदोषाभावोऽवगम्यते ।। अव्यभिचारिणीशिवैकभक्तिश्च उक्तञ्चार्य्याशतके ।। दारुणमसिपत्रवनंदारुणतममस्तुवांधतामिस्रम् ।। कावाक्षतिस्ततोनश्शैवाव यमाचतुर्वदनादिति ।। एवम्भूतेमहत्युत्तमानांकुलेउत्पद्यापीति पदेन यथाअम्नदापद्रक्षकप्रतिगृहीतादेर्गौणपुत्रतामापुर्लोकेन तथाहम्पुनःकथमितिचेत् उत्पद्यापि श्रीरङ्गराजाध्वरिणः पुत्रभावेनजनित्वापीत्यर्थः ।। ननु ।। ननुयत्तमकुलजन्ममात्रेण

सर्वेतत्वविदोभवेयुः ॥ ननिहीनकुलजाइतिनियमोदृश्यतेलो
के ॥ बहुषुब्राह्मणेषुकश्चिदेवतत्ववित्भवति ॥ तिर्यग्गर्भस
म्भवाअपिमहांतोदृश्यंते ॥ तथाचब्रह्मोत्तरखण्डेकाश्चित्वृद्धः
प्रामाणिकआह ॥ किंभाव्यंकिमभाव्यंवासंसारेस्मिन्भ्रमा
त्मके ॥ ईश्वरस्यतुयामायातस्याःकोवेत्तिचेष्टितं ॥ हारिणीग
र्भिणीभूत्वाऋश्यशृंगमसूयत ॥ सुराष्ट्रस्यतथाराज्ञःकरंस्पृ
ष्ट्वासुरांगना ॥ तत्क्षणाद्गर्भिणीभूत्वामनुंप्रासूततापसं ॥
तथासत्यवतीकन्याशफरीगर्भसंभवा ॥ तस्यांव्याससमुत्पन्न
स्सर्वविज्ञानसागरः ॥ विनापिवसुदेवेनरोहिण्यास्तनयोभव
त्॥एवमादिदर्शनान्नहिजन्मस्थानमात्रेणश्रैष्ठ्यंस्वतपएवकारण
मितिचेत्सत्यं ॥ तथापिशुचीनांश्रीमतांगेहेयोगभ्रष्टोभिजाय
ते ॥ अथवायोगिनामेवकुलेमहति धीमतामित्यादिभगवत्सू
क्तेः ॥ अत्रापिशिवरहस्येशैवछंदोगवंशजइतिपरमेश्वरानुग्रह
सूक्त्याचश्रैष्ठ्यमस्त्यैवेत्यर्थः॥ किञ्चत्वन्महिमजलधेस्त्वमाहा
त्म्यसमुद्रस्यशीकराणामणूनत्यल्पांशान् आस्वाद्यापिशिवारा
धनमेवागतिकानामुत्तारकमितिबहूधाविदित्वापिएषपापोहं इ
न्द्रियाणांचापलात्तत्तद्विषमविषयभोगवाञ्छाया तुच्छेषुतुदंति
मनःक्लेशयंतीतितुच्छास्तेषुअहरहरुपभुज्यमानेषुखरसूकर शुन
कादिवत् स्त्रियन्नपानादिविषयभोगेषुव्यग्रउद्युक्तोजागरूक
स्सन् इदमुत्कृष्टंब्राह्मणकुलजन्मापिव्यर्थयामिव्यर्थीकुर्वे ॥
ब्राह्मण्यंप्राप्यलोकेस्मिन्नमूकोबधिरोभवेत् ॥ नापक्रामतिसं
सारात्सखलुब्रह्महाभवेदिति श्रुत्याब्रह्मघ्नोभवामीतिभावः॥
ननुश्रीमद्दीक्षितोयंशिवांशावताररूपःकार्वेटिनगरस्थबोम्मभूप
मुखाराधितः सांसारिकसर्वसाधनसम्पन्नश्श्रौताचारानिरतश्चा

सीदितिजनश्रुतिरास्ते ॥ पुनःकिमर्थंपापोहमित्यादिनात्म निंदयाविषीदतीतिचेत्शृणु ॥ अशुद्धचित्तानांसुखाभासस्सं सारस्सएवधीमतामुरुदुःखप्रदएव ॥ अथवाएतत्स्तुतिकर्तृणां संसारिणामुपकारायवाविषादानुकरणमिति पाक्षिकः ॥ अ पिचश्रीमन्नारायणस्यापिदेवस्यभृगुशापच्छलेन दाशरथिरूपे णावतीर्णस्यरामस्यसीतावियोगनागास्त्र बंधनादिसमयप्रला पवत् शिवांशावताररूपस्याप्यस्य श्रीदीक्षितचरणस्यजन्ममा त्रेणमानुषचेष्टानुकरणंवास्तु ॥ नैतावतास्मदादिवत्सांसा रिकसुखदुः खादिसत्यत्वबुध्याहर्षशोकाद्यनुभवस्तेषांसुधियां भवेत्किं ॥ विपदोनैवविपदस्संपदोनैवसंपदः ॥ स्वस्वरूपं भवेत्सम्पत्तदन्यत्सुधियांविपदितिन्यायेनपारमेश्वराधिगत मनुष्यजन्मादि प्रतीत्याकिंचित्स्वरूपभानप्रत्यूहशारीरधर्मभा नमेवधीमतांदुःखहेतुः क्वचित्क्वचिद्भवतिसंततमिदम्मेभूयादि दम्माभूदितिशोभनाशोभनभ्रमज नितरागद्वेषवतांभवक्लेशस्व भावएवधीमतामनुकरणमात्र मितिगम्यतेयद्यन्यथा ॥ इंद्रजि दाहवादिस्थले श्रीरामचंद्रवचनं ॥ परित्यक्षाम्यहम्प्राणान् वानराणांचपश्यतां ॥ धिङ्मांदुष्कृत कर्माणमनार्य्यमत्कृतेह्य सौ ॥ लक्ष्मणः पतितश्शेतेशरतल्पेगता सुवादित्यादिदीनवच सांयथार्थत्वांगीकारोनहिसाधुसम्मतः ॥ तथेहापिकिंचित्भ [illegible]दुस्त्यवाप्राणिनामेतत् स्तुतिकर्तृणांउपकारायवाकेव [illegible]षपापोहञ्जन्मव्यर्थयामीत्यादि बहुपुस्थलेषू च्यतइतिभा वः ॥ अन्वयः ॥ एषपापः उत्तमानांमहतिकुले उत्पद्यापि त्वन्महिमजलधेश्शीकराणूनास्वाद्यापि इंद्रियाणांचा पलात्तु च्छेषुव्यग्रस्सन्त्वत्पादार्चाविमुखहृदयश्चसन् जननंव्यर्थया-

मि ॥ आह्वकर्षं ॥ स्मरहरेतिसम्बोधनेनकामादिदोषान् व्यपो
ह्यमांत्वत्स्वरूपध्यानमुदितंकुर्याइतिभावः ॥ ७ ॥

मू० ॥ अर्कद्रोणप्रभृतिकुसुमैरर्चनन्तेविधेयंप्राप्यंतेनस्मरहरफलंमोक्षसाम्राज्यलक्ष्मीः ॥ एतज्जानन्नपिशिवशिवव्यर्थयन्कालमात्मन्नात्मद्रोहीकरणविवशोभूयसाधःपतामि ॥ ८ ॥

टी. उक्तमेवार्थंप्रकारांतरेणपुनर्विज्ञापयति । अर्केति ॥ हेस्मरहरतेतवार्चनमाराधनं अर्कद्रोणप्रभृतिकुसुमैर्विधेयं अर्चयंत्यस्यपुष्पैरित्यर्कः ॥ मंदारश्चार्कपर्णेत्रशुक्लेलर्क प्रतापसाविति ॥ नि ॥ द्रोणंप्रसिद्धंश्रीकालहस्त्यादौ ॥ अर्कद्रोणप्रभृतीनामोषधीनांकुसुमैः कुश्यतिश्लिष्यत्यत्रभ्रमरादिरितिकुसुमानि॥ अथवाकुत्सितानिसुमानीतिवा ॥ निरावरणकुत्सितदेशसमुत्पन्नानिसुमानीतिवा॥ मल्लिकाचम्पकादेरिवआवरणपालकज ल सेकादिक्रियांविनैवसाधारणदृष्टिमात्रेणाभिवृद्धानि ॥ अतएव कैश्चिदप्यनभिलषणीयानीतियावत् ॥ श्रीशिवार्चनसाधनद्रव्य सौलभ्यंप्रसिद्धंहिगीतासु ॥ चंदनंबिल्वकाष्ठस्यपुष्पाणिवनजान्यपि ॥ फलानिताहशान्येवयस्यप्रीतिकराणिवै ॥ दुष्प्र तस्यसेवायांकिमस्तिभुवनत्रये ॥ वन्येषुयादृशीप्रीतिर्वर्ततेपरमेशितुः ॥ उत्तमेष्वपिनास्त्येवतादृशीग्रामजेष्वपि ॥ तंत्यक्त्वाताहृशंदेवंयस्सेवेतान्यदेवताः ॥ सतुभागीरथींत्यक्त्वाकांक्षतेमृगतृष्णिकामिति ॥ वायुसंहितायां ॥ नद्यांतुसिकता

वारिकुसुमंसुलभंवने ॥ नास्त्येवकरणक्लेशः कर्त्तव्यस्सकृद ञ्जलिः ॥ एवम्पूजास्वशक्तस्यज्ञानङ्किंसुलभम्भवेदिति ॥ अ त्रार्कादिग्रहणात्मंदारचम्पकेइंदीवरपद्मादि सम्पादनव्याया मोमास्तु ॥ शल्मलीवाहसोन्मत्तमुखैरपिकुसुमैस्तवार्चनंविधे यंविधातुंयोग्यंभवतीत्यर्थः ॥ सत्येवंयथाभारवाहिनाम्बहूनां मध्येतत्तद्भारदूरदेशाद्यनुगुणंवेतनफलंनतथेहभवति ॥ किंतुका श्मीरनिक्षिप्तशाल्यादिकलमवदनंतफलदमित्याह तेनार्कद्रोणा दि कुसुमवन्यफलकुल्याकूपसलिलादिहीनसाधनवतापूजने नापिप्राप्यंफलंप्रयोजनं मोक्षसाम्राज्यलक्ष्मीरेव मोक्षोमोक्षण मवसानमविद्याकामकर्मदुःखा देस्तस्यमोक्षस्याखण्डानन्दल क्ष्मीरित्यर्थः ॥ तथाचाशिवपुराणं ॥ शिवेदत्तंहुतंजप्तंफलान्ना दिनिवेदनं ॥ एकञ्चाक्षय्यफलदंतद्विधानान्नसंशयः ॥ एवम तिप्रसादलाभायविष्ण्वादयोप्याराधयंतीतितत्रैवाह ॥ इंद्रनी लमयंलिंगंविष्णुःपूजयतेसदा ॥ विष्णुत्वंप्राप्तवांतेनसोभूदी शस्सनातनइति ॥ भारते ॥ यस्यब्रह्माचविष्णुश्चत्वञ्चशक्रंस हामरैः ॥ अर्चयध्वेसदालिंगंतस्माच्छ्रेष्ठतरोहिकः ॥ ऋ ता पिदेवाश्चगंधर्वाप्सरसस्तथा ॥ लिङ्गंयस्यार्चयन्तिग्मतद... ध्यतमश्शिवः ॥ जैमिनिभारते ॥ जोतींषित्रिदशानागायक्षा श्चंद्रार्कमारुताः ॥ सर्वेपुरुषकारेणमनुष्यादेवतांगताः ॥ इतिनिष्कामानांसकामानांचभुक्तिमुक्तिप्रदंशिवार्चनंतवद्रूपप्रा प्तिफलपर्यन्तंभवतीत्येतज्जानन्नपिहेशिवशिववीप्साभीतिंद्यो तयतितथाचवार्तिकाचार्याः ॥ लोकेपिमहतींभीतिमापन्ना शिवशासनाः ॥ तूर्णंशिवशिवेत्युच्चैर्भजन्तिभयहारिणमिति ॥ इहभयकारणंतु अत्यल्पश्रमसाध्यपूजाया महाफलप्रदत्वंजान

न्नपिनाहंशित्रमर्चयामीतिभीत्याशिवशिवेतिस्मृतं ॥ हेआ त्मन्कालमनेककल्पमारभ्यैतावत् पर्यंतंवाकालंव्यर्थयन् विगता र्थमेवकुर्वन्करणविवशः ॥ अतएवात्मद्रोहीचसन्सर्वेश्वरस्य सर्वात्मकस्यतवमहिमानं विस्मृत्यजीवदेहतत्संबंधेष्वहम्ममे तिभावालंबनमेवात्मद्रोहः ॥ श्रु ॥ अन्यथासंतमात्मानं योन्यथाप्रतिपद्यते ॥ किंतेननकृतंपापंचोरेणात्मापहारिणे ति ॥ अन्यद्रोहिणामेवप्रायश्चित्तंविधीयते नह्यात्मद्रोहिणइ त्यतश्चभूयसाअत्यन्तमधःपतामीत्यर्थः ॥ अयम्भावःलोकेऽ त्यन्तदुःखीसुखेप्सुरल्पाया सेनमहासुखसाधनप्राप्त्युपायम् विजानन्नपिभवनक्षेत्रादिकंसर्वस्वंपणबन्धंविधायस ततंद्यूत रतिस्सन्कथमुद्गच्छेदितिभावः ॥ परिवृत्तिर्विनिमयोन्यूना भ्यधिकयोर्मिथइतिलक्षणंपरिवृत्त्यलंकारः ॥ ८ ॥

मू० ॥ किंवाकुर्वेविषमविषयस्वैरिणावै रिणाहं बद्धस्वामिन्वपुषिहृदयग्रंथिना नासार्द्धमस्मिन् ॥ उक्ष्णादर्पज्वरभ रजुषासाकमेकत्रनद्धः श्राम्यन्वत्सः स्मरहरयुगेधावताकिंकरोतु ॥ ९ ॥

टी० दृढप्रयत्नेनसर्वसर्वस्यसिद्ध्येदितिचेन्नमदन्तरशत्रु र्बलीयान् तेनाहंयोद्धुंनशक्नोमीत्याहकिंवेतिहेस्वामिन् अहंवि षमविषयस्वैरिणा विषमाःकंटककर्दमप्रस्तरवदधरोत्तरायेवि षयाइंद्रियार्थाअप्राप्यविषयाइत्यर्थः तेषुस्वैरिणास्वच्छन्दंवि शृङ्खलंधावताबलवताअशक्तस्यममवैरिणा हृदयग्रंथिनाहृदय

स्थिताविद्याकामकर्मवशंगतनानावासनाजटिले नग्रंथिनासा र्द्धं अस्मिन्वपुषिउप्यतेपूर्वकर्मभिरितिवपुस्तस्मिन्वपुषिस्वा मिनात्वयेतिशेषःबद्धस्सन्किंकुर्वे ॥ किमपिकर्तुंनशक्नुया मित्यर्थः ॥ हेस्मरहरपृथक्सम्बोधनतः अत्रदृष्टांतोमयावि ज्ञाप्यतइत्यभिमुखीकरणंगम्यते ॥ दर्पज्वरभरजुषादर्पस्य मदस्यज्वरभरंज्वराधिक्यंभजताअतोविषमदेशे षुस्वच्छन्दं धावताउक्ष्णाउक्षतिरेतस्सिंचतीत्युक्षा ॥ उक्ष सेचनइ तिधातुः ॥ तेनसाकंयुगेयुग्यबंधनदंडेएकत्रदृढपाशेननद्धो बद्धः श्राम्यन्वत्सःप्रथमेवयासिवसतीतिवत्सःवसनिवासे । एकहायनोवत्सःकिम्वाकरोतुअकिञ्चित्करस्सन्नश्येदेवेत्यर्थः ॥ यथादर्पितेनधावतोक्ष्णासाकमेकत्रयु गेनद्धोवत्सः प्रतियो गितुल्यबलाभावाद्विषमदेशेषुयातंपातं मूर्च्छितोभवेत् ॥ तद्व देतर्हृदयग्रंधिनासार्द्धमस्मिन्वपुषित्व यानद्धःस्वामिनमंतरेण पशुमिमंबद्धंमोक्तुंवाकईष्टे ॥ तस्मादकिञ्चित्करश्श्रांतोभवं॥ ततस्त्वयायंपशुःमोचनीयइतिभावः अन्वयः ॥ स्वामिन्नहं विषमविषयस्वैरिणावैरिणाहृदयग्रंधिनासार्द्धमस्मिन्वपुषिस्वा मिनात्वयाबद्धःकिंवाकुर्वे ॥ स्मरहरदर्पज्वरभरजुषाधाव उक्ष्णासाकमेकत्रयुगेनद्धश्श्राम्यन्वत्सःकिंकरोतु ॥ विष मंवर्ण्यतेयत्रघटनाननुकूलयोरितिलक्षणाद्विषमालंकारः ॥९ ॥

मू० ॥ नाहंरोद्धुंकरणनिचयंदु र्नयंपारयामिस्मारंस्मारंजनि पथरुजंनाथसीदामिभीत्या॥

किंवाकुर्वेकिमुचितमिहक्काद्य
गच्छामिहं तत्वत्पादाब्जप्रप
तनमृतेनैवपश्याम्युपायं १०

टी० ॥ दुरिंद्रियनिग्रहेप्यसमर्थोहङ्काम्यङ्कर्मकृत्वातत्फलं यथेच्छमनुभवामीत्युक्तेजन्मजरानरकगर्भवासादिदुःखम् स्मृत्वाबिभेमिततोभवच्चरणप्रपतनं विनान्यागतिर्नेत्याहनाहमितिनाथअहंदुर्नयंदुःखेनस्ववशंनेतुंयोग्यम् करणनिचयङ्करणानामिंद्रियाणांसमूहंरोद्धुंदुर्विषयेभ्यःप्रतिनिवर्तयितुंप्रत्यङ्मुखीकर्तुंनपारयामिनशक्नोमीत्यर्थः ॥ श्रुतिः ॥ परांचिखानिव्यतृणत्स्वयम्भूस्तस्मात्परांपश्यतिनांतरात्मन्नितिश्रुतेः ॥ बहिर्मुखानिकरणानिचरंतुइहधनदारभोगानेवभुञ्जामीतिचेत् पुनःपुनः भुक्तार्थेष्वेवभोगविशेषुभोगवांछयाकर्मकर्तव्यङ्कर्मफलभोगायजन्मभवेत् ॥ जन्मिनःकर्मकर्त्तव्यमित्यविछिन्नमहानदीस्रोतोवदनिवार्यमेव ॥ श्रुतिः ॥ कुर्वन्नेवेहकर्माणिजिजीविषेच्छतꣳसमाः॥ असुर्यानामतेलोकाअंधेनतमसावृताः ॥ ताꣳस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाइति ॥ पूर्वाचार्याश्च ॥ कुर्वंतेकर्मभोगायकर्मकर्तुंचभुंजते ॥ नद्यांकीटाइवावर्त्तादावर्तांतरमाशुते ॥ व्रजंतेजन्मनोजन्मलभंतेनैवनिर्वृतिमितिन्यायेनजनिमृतिरुजञ्जननमरणमार्गसम्भवंतापं स्मारंस्मारंस्मृत्वास्मृत्वाभीत्यासीदामि ॥ ज्ञानयोगखण्डे ॥ इत्थम्परिणतांगर्भःपूर्वकर्मवशान्मुने ॥ महद्दुःखमवाप्नोतिरौरवेनरकेयथा ॥ तांपीडांचविजानातितदाजातिस्मरोभवेत् ॥ नानायोनिसहस्रा

णिपुराणशास्त्रानिवैमया ॥ आहाराविविधाभुक्ताःपीताश्चविवि धास्तनाः ॥ जातश्चैवमृतश्चैवजन्मचैवपुनःपुनः ॥ अहोदुः खोदधौमग्नोनपश्यामिप्रतिक्रियां ॥ यदियोन्यांप्रमुञ्चामि तंप्रपद्येमहेश्वरं ॥ इत्थङ्गर्भगतस्मृत्वायोनियन्त्रप्रपीडनात् एवमादिसांसारिकींरुजंस्मृत्वाभीत्याविषीदामिनहि किंचिदु त्तरणोपायंवेद्मिसत्येवंइहास्मिन्विषयेद्वैविध्येकिंवाकुर्वेकिंवाद्य विधातुमुचितंक्ववागच्छामिहंतविषादेसर्वथासमालोच्यमानेत्व त्पादाब्जप्रपतनमृतेतवपादारविंदयोःप्रपतनंसञ्छिन्नद्रुमवत्प तनम्विना ॥ पृथक्विनांतरेणर्तेइति ॥ नि ॥ अन्यमुपायं नपश्यामिउपैत्यात्मनोहितं अनेनेत्युपायःतन्नपश्यामीत्यर्थः॥ अथवात्वत्पादाब्जप्रपदनमृतेप्रपदनंनिरोधोविदुषामितिश्रुत्या अनन्यशरणश्शरणवरणंविनोपायांतरन्नपश्यामीत्यर्थः ॥ अ न्वयः ॥ नाथअहंदुर्नयङ्करणनिचयंरोद्धुन्नपारयामिजनिपथ रुजंस्मारंस्मारंभीत्यासीदामिकिंवाकुर्वेकिमिहोचितं अद्यकग च्छामिहंत त्वत्पादाब्जप्रपदनमृतेअन्यमुपायंनपश्यामि॥ वि नोक्त्यलङ्कारः ॥ १० ॥

मू० ॥ उल्लंघ्याज्ञामुडुपतिकलाचूडतेवि श्ववंद्यत्यक्ताचारः पशुवदधुनामुक्त लज्जश्चरामि ॥ एवंनानाविधभवत तिप्राप्तदीर्घापराधः क्लेशांभोधिम् कथमहमृतेत्वत्प्रसादात्तरेयं ॥ ११॥

टी० हेविश्ववंद्यउडुपतिकलाचूडउड्डीयन्तइत्युडूनि ॥

डीङ्विहायसागतौ ॥ तेषांपतिश्चन्द्रः नस्यकलाअमृतमय्यः तिथीरूपाः तासुचतुर्थीकला,जटामंडलमकुटयोस्संधौ,किञ्चि द्वामभागेऽस्यास्तीतितथोक्तः तेतवाज्ञांश्रुतिपुराणस्मृत्यादिरू पामाज्ञामुल्लंघ्यातिक्रम्य ॥ यावज्जीवमग्निहोत्रंजुहुयात् शिव लिंगत्रिसंध्यमहरहरभ्यर्चयेत् ॥ नाप्सुमूत्रपुरीषंकुर्यात् इति विधिनिषेधरूपामाज्ञप्तिमुल्लंघ्य,तिक्रम्यत्यक्ताचारः बुद्धिपूर्वम् त्यक्तस्सदाचारोयेनसस्त्यक्ताचारः, अतएवपशुवल्लोकरीतिं नरपतिशासनञ्चाविज्ञाय,शाल्यादिकं,भक्षयन् तत्क्षणेक्षेत्रपा-लशिक्षितः कर्षणवहनादिक्लेशेनकुर्वन्कदावामद्दुःखविनाशः, तत्र,कउपायइत्यनभिसंधाय,चतुष्पात्पशुः क्वचित्क्लिश्यन्क्वचि न्मत्तश्चरेद्यथा ॥ तद्वन्मुक्तलज्जएवचरामीत्यर्थः ॥ हेवि-श्ववंद्यएवंनानाविधभवततिप्राप्तदीर्घापराधः ॥ एवमुक्तप्रका रेणनानाविधभवततयस्संसृतिपरम्परास्तास्वेवसंप्राप्तादीर्घा श्चिरकालसम्भृताः अपराधाः ॥ रध ॥ हिंसायां ॥ हनना दिदुष्कर्माण्यस्यसंतीतितथोक्तः अहंक्लेशांभोधिः अविद्यादि रस्मितारागोद्वेषोऽभिनिवेशइतिपञ्चक्लेशाइतिश्रीपतञ्जालिः ॥ सपञ्चविधः क्लेशएवांभसान्निधिर्जलधिः तंक्लेशांभोधिंत्व त्प्रसादादृते,विना,कथंतरेयंनकथञ्चनतर्तुम् शक्नुयामित्यर्थः ॥ तस्मात् त्वंप्रसीदेतिभावः ॥ विनोक्त्यलङ्कारः ॥ ११ ॥

मू०॥क्षाम्यस्येवत्वमिह,करुणासा
गरः,कृत्स्नमागस्संसारोत्थम् गि
रिश,सभयप्रार्थना,दैन्यमात्रात् ॥

यद्यप्येवंप्रातिकलमहं व्यक्तमा
गस्संहस्त्रंकुर्वन्मूकः कथमिवत
थानिस्तृपःप्रार्थयेयम् ॥ १२ ॥

टी. एवंत्वदाज्ञोल्लंघनापराधकृदप्यहंसकृत्त्वांसभयंप्रा
र्थयेयंयदित्वंकरुणयाक्षाम्यस्येवंतदाप्यागः कुर्वन्निर्लज्जं कथं
वाप्रार्थयामीत्याह ॥ क्षाम्यसीति ॥ गिरिशकैलासपतेगिरि
भक्तानांवाचिसदाशेते ॥ वेदलोकव्यवहारमधुरभाषणशक्ति
प्रदइतिवागिरिशः ॥ करुणासागरस्त्वमिहापराधिविषयेसं
सारोत्थम् संसरत्यस्मिन्नितिसंसारः ॥ तत्रानिवसतांदारसुत
धनादीनांस्नेहतः परेषांवैरतश्चसमुत्थं सम्भूतंकृत्स्नंकृत्यतेव्या
प्रियतेअनेनेति कृत्स्नंआगः ॥ आगोपराधोमंतुश्च ॥ नि ॥
अग॥ कुटिलायांगतौसभयप्रार्थनादैन्यमात्रात् सभयंयथाभव
तितथाअभ्यर्थन वचनानांदैन्यस्यदीनभावाभिनयस्यलेशात्
करुणानिधित्वात्क्षाम्यस्यैव ॥ एवंयद्यपिप्रतिकलंकलाअ
त्यल्पकालपरिमाणाः तासुकलासुकलासुप्रतिकलं आगस्सह
स्रमपराधकोटिंकुर्वन् अतएवमूकः मूयतेबध्यतेवातादिनावा
ग्वृत्तिरस्येतिमूकः ॥ मूङ् ॥ बंधने ॥ मूर्खइतिपाठांतरं॥एव
म्भूतोहंनिस्त्रपःनिर्गतात्रपायस्मात्सनिस्त्रपः ॥ त्रपूष् ॥
लज्जायां ॥ कथंवाप्रार्थयेयंअज्ञदशायामपराधशतंकुर्वन्॥ क
श्चित् स्वामिसन्निधौक्षमापनसमयेपिपुनराधिकापराधीसन् नि
र्लज्जंकथंविज्ञापयिष्यतीतिभावः ॥ अन्वयः ॥ गिरिशकरु
णासागरस्त्वंइहमदभ्यर्थनविषयेसंसारोत्थं कृत्स्नमागस्सहस्रं

सभयप्रार्थनादैन्यमात्रात्क्षाम्यस्येवएवंयद्यपिप्रतिकलमागस्स
हस्रंव्यक्तंकुर्वन्मूकोनिस्त्रपश्चसन्कथमिवप्रार्थयेयं ॥ १२॥

मू० ॥ सर्वंक्षेप्तुंप्रभवतिजनस्संसृति
प्राप्तमागश्चेतश्श्वासप्रशमसमये त्व
त्पदाब्जेनिधाय ॥ तस्मिन्कालेयदि
ममममनोनाथदोषत्रयार्त्तं प्रज्ञाहीनंपुर
हरभवेत्तत्कथम्मेघटेत ॥ १३ ॥

टी० हेनाथजनःश्वासप्रशमसमयेचेतः चेतयतीतिचे
तोन्तःकरणंत्वत्पदाब्जेनिधायअनितरवृत्तिकंसंस्थाप्यसंसृति
प्राप्तंसर्वमागःक्षेप्तुंत्यक्तुंप्रभवतिशक्नोति ॥ अपराधशतंकृ
त्वापिमरणकालेपश्चात्तापेनसहप्रपन्नस्य रक्षणीयत्वादितिभा
वः ॥ तस्मिन्कालेचरमश्वाससमयेदोषत्रयार्त्तंमनः ॥ दो
षाणांत्रयंदोषत्रयं ॥ दोषाआध्यात्मिकाआधिभौतिकाआ
धिदैविकास्त्रिविधाः ॥ पुत्रैषणावित्तैषणादारैषणावा ॥ अ
श्रद्धाकुतर्कधीमांद्यरूपावासंशयासंभावनाविपरीतभावनावा-
दोषास्तेषांत्रयेणार्त्तंपीडितंमेमनः ॥ मनुतेअनेनसर्वमिति
मनः ॥ प्रज्ञाहीनं ॥ प्रज्ञात्रैकालिकीप्रज्ञेतिवचनात्पूर्वानु
भूतदुःखानि ॥ भाविपरलोकयातनागर्भवासादीनिअधो
र्ध्वश्वासहिक्कादिसंभवान्य धुनातनानिचप्रकर्षेणजानातीति
प्रज्ञा ॥ ज्ञा ॥ अवबोधने ॥ मन्मनःतयाप्रज्ञयाहीनम्पृथक्
भवेद्यदि ॥ हेपुरहर ॥ अवस्थात्रयसाक्षिन्तत्कालेमूढस्यमम
चेतस्समर्पणङ्कथंवाघटेत ॥ नघटतएवेतिभावः ॥ अन्वयः ॥

जनश्श्वासप्रशमसमयेचेतस्त्वत्पादाब्जेनिधायसंसृतिप्राप्तंस
र्वमाग:क्षेप्तुंप्रभवामि ॥ नाथतस्मिन् कालेदोषत्रयार्तमेमनः
प्रज्ञाहीनंभवेद्यदिममतत्कथंघटेत ॥ विरुद्धंभिन्नदेशत्वङ्का
र्योत्पत्तेरसङ्गतिरित्यसंगत्यलङ्कारः ॥ १३ ॥

एवमुक्तप्रकारेणमरणसमयेमनोदोषान्व्यपोह्यचेतस्सम
र्पणेतदाकाबाधेत्यतआह ।

मू० ॥ प्राणोत्क्रान्तिव्यतिकरदलत्संधि
बन्धेशरीरे प्रेमावेशप्रसरभ्रमिताक्र
न्दितेबन्धुवर्गे ॥ अन्तःप्रज्ञामपिशि
वभजन्नन्तरायैरनन्तैराविद्धोहंत्वयि
कथमिमामर्पयिष्यामिबुद्धिम् ॥ १४ ॥

टी० । हेशिवस्वयंप्रकाशवशकांताविति धातुःशिवशब्द
एवन्निरुच्यते । हिंसिधातोस्सिंहशब्दोवशकांतौशिवस्मृतः
वर्णव्यत्ययतस्सिद्धंपश्यकःकश्यपोयथेति । शीङ्स्वप्नमवि
द्यांवातिगच्छतीति । श्रु । अनेनजीवेनात्मनानुप्रविश्यनामरूपे
व्याकरवाणीतिश्रुतेः । शिवोऽतिशुद्धइति । आश्रितशिवदइतिच
॥ शैवे ॥ अनादिमलसंश्लेषप्रागभावात्स्वभावतः । अत्यंतपरि
शुद्धात्मेत्यतोयंशिवउच्यते । अथवाशेषकल्याणगुणैकघनईश्व
रः ॥ आश्रितात्यंतशिवदश्शिवइत्युच्यतेबुधैः । शिवस्सर्वसमइ
तिकर्णपर्वणि । समाभवंतितेसर्वेदानवाश्चामराश्चये । शिवोस्मि
सर्वभूतानांशिवत्वंतेनमेस्मृतम् । शिवस्वजनार्थसिद्धिदइति
आनुशासनिकपर्वणि । समेधयतियन्नित्यंसर्वार्थानामुपक्रमम् ।

शिवमिच्छन्मनुष्याणांतस्मादेषशिवस्स्मृतइति। शिवशब्दस्याशिवशक्त्युभयवाचकत्वंवायुसंहितायाम्। शंसुखंपरमानंदमिकारःपुरुषस्मृतः। वकारश्शक्तिरस्मृतंशिवइत्युच्यतेबुधैः॥ साक्षाच्छ्रुत्यादिषुशिवनामप्रसिद्धिरस्त्येवहि । श्रु। अमात्रोनंतमात्रश्चद्वैतस्योपशमश्शिवः। विशिष्यवैदिकैरेवशिवशब्दआशास्यमानोदृश्यते। श्रु। शिवाऋतवस्सन्तुशिवाओषधयस्सन्तु शिवावनस्पतयस्संतुअहोरात्रेशिवस्यातांस्वस्तिशिवंकर्मास्त्विति परममङ्गलवाचकत्वात्प्रयाणकालेयमभटकटुभाषणोद्भटसकलभयहरंनामेदंस्मरणीयमितीममर्थंव्यञ्जयन् भगवान्दीक्षितचरणः शिवेतिसम्बुद्धिं कृतवानितिधीमद्भिर्ज्ञातव्यं॥हेशिव अस्मिन् शरीरेप्राणोत्क्रांतिव्यतिकरदलत्सन्धिबंधे । प्राणस्यमुख्यप्राणस्योत्क्रांतिरुत्क्रमणंऊर्द्ध्वगमनंतस्याव्यतिकरेणसंबन्धेनदलन्तःसन्धीनांगुल्फजानुकटिकूर्परादीनांबन्धायस्यतत् । तस्मिन्शरीरेतदाप्राणोत्क्रांतिव्यतिकरदलत्संधिबन्धेसति । तथाबन्धुवर्गेबद्ध्यंतिप्रेम्णेतिबन्धवःदारसुतादयस्तेषांवर्गःसमूहस्तस्मिन्। प्रेमावेशप्रसरदमिताक्रान्दितेसतिप्रियस्यभावः प्रेम तस्यावेशः प्रसह्यांतःप्रवेशः तस्यप्रसरेणपरंपरयाहृदयतोदिन्याधियाद्गमितंविकुण्ठितं आक्रन्दितं रोदनघोषश्चयस्य तस्मिन्बन्धुवर्गेसति। उक्तञ्चीतासु॥ मर्मसूत्कृष्यमाणेषुमुच्यमानेषुसन्धिषु॥ यद्दुःखंम्रियमाणस्यस्मर्यतांतन्मुमुक्षुभिः॥ दृष्टावाक्षिप्यमाणायांसंज्ञयाह्रीयमाणया॥ मृत्युपाशेनबद्धस्यत्रातानैवोपलभ्यते॥ अयःपाशेनकालेनस्नेहपाशेनबंधुभिः। हिक्कयाबाध्यमानस्यश्वासेनपरिशुष्यतः। मृत्युनाकृष्यमाणस्यनखल्वस्तिपरायणम्॥ संसारयन्त्रमारूढोयमदूतैरधिष्ठितः

॥ क्यास्यामीतिदुःखार्त्तःकालपाशेनयोजितः ॥ किंकरोमि क्वगच्छामिकिंगृण्हामिजहामिकिम् ॥ नीयतेमृत्युनाजन्तुःपरि ष्वक्तोपिबन्धुभिः । सागरांतर्जलगतोगरुडेनैवपन्नगः । हा कांते हाधनं पुत्राः क्रन्दमानस्सुदारुणम् । इत्यादिद्रष्टव्यं ॥ एवंशरीरेखण्डशश्छिद्यमाने बन्धुवर्गेप्रेम्णारुदितघोषेचसति अंतःहृदयदेशेप्रज्ञामपिभजन् । अहंअनंतैरंतरायैराविद्धश्वसन् अंतःप्रज्ञाप्तिभाक्त्वमस्यमुमूर्षोर्नहितायभवेदापितु दुःखायैवेश्व राज्ञयाभवति । तदांतःप्रज्ञयाबहिर्वक्तुमशक्तोपिधनदारादी नुस्मृत्वाखिद्यतिउक्तंह्यार्याशतके । प्रायेणमुह्यतिचेतःप्राणभृ तःप्राणनिर्गमावसरे । पुण्येनयादिनमुह्यतिपुत्रंवान्यत्स्मरन्म्रियते इति ॥ श्रीसूतश्चमरणचिन्हमाह ॥ श्वभ्रेयोनिपतेत्स्वप्नेपांसुके वापिपङ्किले । अग्नौयोनिपतेद्वापियोवानष्टस्मृतिस्सदा ॥ या म्यंशब्दंचयोब्रूयात्तस्य मृत्युरुपस्थितइतिपुनस्तयाप्रज्ञयायमदू ताहिवह्निपतनादिंजानातिबहिर्मुखेइमे मन्मृतिंकांक्षंतेअपरेऽपह संति । अन्येरुदंतिएतेरन्ध्रमन्विष्यंतीति विचार्यअसङ्ख्यातैः देहबाधैःपिपीलिकामाक्षिकामत्कुणमश काद्यंतरायैश्चाविद्धस्स न्नूइहसुखावस्थायामप्यवशा मिमांबुद्धिंत्वयिप्रत्यगात्मनितदा समर्पयिष्यामिकथंत्वदधीनांकरिष्येइत्यर्थः । चत्वारोरसवत्प्रे यऊर्जस्वांश्चसमाहितइतिलक्षणात् प्रेयोलङ्कारः ॥ १४ ॥

अवतारः । यतएवमुक्तरीत्याचरमसमयबुद्धिसमर्पणान वकाशःप्रसिद्धएवास्ते । ततोऽद्यैवबुद्ध्यात्मानन्त्वयिसमर्पया मीतिविज्ञापयति ॥

मू० ॥ अद्यैवत्वत्पदनळिनयोरर्प

याम्यन्तरात्मन्नात्मानम्मे सहपरिकरै रद्रिकन्याधिनाथ ॥ नाहंबोद्धुंशिवत वपदन्नक्रियायोगचर्याः कर्त्तुंशक्नोम्य नितरगतिःकेवलंत्वांप्रपद्ये ॥ १५ ॥

टी० हेअन्तरात्मन्नन्तर्हृदयारविन्दे स्थित्वादर्शनश्रव णादिकृदिन्द्रियप्राणादिचेष्टासाक्षितयासदाहमिति स्वरूपेणै वावभाससइत्यन्तरात्मा॥ अयमात्मशब्दोनिरूच्यतेस्मृत्या ॥ यच्चाप्नोतियदादत्तेयच्चात्तिविषयानिह । यच्चास्यसन्ततोभा वस्तस्मादात्मेतिगीयतइति । अयमर्थोप्यनुभूतिप्रकाशेनिरु च्यतेचतद्यथा। व्याप्नोत्यनवशेषेणसर्पादीन्स्रगिवाखिलान् ॥ कल्प्यानधिष्ठानतयाप्रत्यगात्माभवेत्ततः । सर्वाधिष्ठानसन्मा त्रइत्यशेषजगत्प्रति । अधिष्ठानतयाव्याप्तिंश्रुतिर्ब्रूतेसदात्म नः । स्वचिदाभासमोहेनतदुत्थानखिलान्यतः । आदत्तेना त्मनःप्राज्ञस्ततआत्मेतितंविदुः । परेआत्मनिसर्वेपिसम्प्रति ष्ठन्तएकले॥ पृथिव्याद्याअनात्मानइतिचाथर्वणीवचः। आत्मा भासाःपराचीनार्थावृत्तीर्विषयोन्मुखाः॥ प्रत्यगत्तियतोतोसा वात्मेत्युक्तोमनीषिभिः । विश्वोवास्थूलभुङ्नित्यंतैजसः प्र विविक्तभुक् । आनंदभुक्तथाप्राज्ञइतिचागमशासनम् । अ व्यावृत्तानानुगतःपूर्णस्वात्मन्यवस्थितः । यतोस्यसन्ततोभा वस्तस्मादात्मेतिगीयते । तद्विष्णोरितिमन्त्रोपिविष्णोस्तत्पर मम्पदम् । चक्षुर्वदाततंव्योम्निव्याचष्टेप्रत्यगात्मनि । चतुर्विध निरुक्त्यात्रचत्वारोर्थाप्रकीर्त्तिताइति । इत्थम्भूत हेअंतरा

त्मन् मेअभिमानिनआत्मानमन्तःकरणंसहपरिकरैः इन्द्रियप्रा णाद्याःपरितस्वस्व स्थानेषुस्थित्वासश्रद्धंस्वामिकार्यंकुर्वंतीति परिकरास्तैःसहात्मानंत्वत्पदनलिनयोरर्पयामि। अथवापरि करा:पुत्रपौत्रशिष्यादयः तै स्सहात्मानमिदंशरीरमद्यैवसमर्प यामि । शरीरादेस्त्वत्पदसमर्पणेनानिवृत्तकर्मबंधस्सन्स्त्वद्रू- पेणैवावशिष्ये इतिभावः । किमेवंसमर्पयसीतिचेत् । अद्रिक न्याधिनाथशिवमङ्गलप्रद अहंतवपदंराहोश्शिरइतिवत्। पद्यते प्राप्यतइतिपदं तवसच्चिदानंदस्वरूपम्बोद्धुमीदृक्ताद्दगितिबुद्धि वृत्त्याविषयीकर्तुंनशक्नोमि। तथाचनाक्रियाश्चकर्माणीत्यर्थः। संस्कृतिरूपाःक्रियाः श्रीगौतमेनोक्तास्ताउच्यंते । गर्भाधा नंपुंसवनंसीमन्तोन्नयनञ्जातकर्मनामकरणान्नप्राशनचौलोपन- यनम् । चत्वारिवेदव्रतानिस्नानंसहधर्मचारिणीसंयोगः । पञ्चानांयज्ञानामनुष्ठानंदेवपितृमनुष्यभूतब्रह्मणामेतेषाञ्च । अष्टकापार्वणश्राद्धंश्रावण्याग्रहायणीचैत्र्याश्वयुजीचेतिसप्तपा कयज्ञसंस्थाः अग्न्याधानमग्निहोत्रंदर्शपूर्णमासाग्रयणंचातुर्मा- स्यानिरूढपशुबन्धसौत्रामणीतिसप्तहविर्यज्ञसंस्थाः । अग्नि ष्टोमोत्यग्निष्टोमउक्थ्यषोडशीवाजपेयोतिरात्रोप्तोर्याम इतिस प्तसोमसंस्थाः । इत्येतेचत्वारिंशत्संस्काराः । एतदवांत स्नानसंध्यातर्पणदेवार्चनकृच्छ्रचान्द्रायणादिप्रायश्चित्त सर्वा ताःक्रियाश्चकर्तुंनशक्नोमि । तथाचयोगचर्यायोगसिद्धयेदे हादिशोधनार्थंचीयतेक्रियतइतियोगचर्यातांतदुक्तमादिनाथे योगाचार्येण।अत्याहारःप्रवासश्चप्रजल्पोनियमाग्रहः। जनसं सँगश्चलौल्यञ्चषड्भिर्योगोविनश्यति । उत्साहोनिश्चलंधैर्य र्यं तत्वचिंताशिवार्चनम् । जनसंगपरित्यागष्षड्भिर्योगःप्रसि

ध्यतीतिसाधकत्वाधकानुक्त्वापुनराह । धौतिर्वस्तिश्चनीतिश्च त्राडनंलौलिकंतथा। कपालभातिश्चैतानिषट्कर्माणिप्रचक्षते ॥ कर्मषट्कमिदंप्रोक्तंघटशोधनकारणं॥ सूर्यभेदनमुज्जायीतथासी त्कारशीतली ॥ भस्त्रीकंभ्रमरीमूर्च्छाकेवलाचाष्टकुंभकाइती मानियोगकर्माण्याचरितुंचनशक्नोमि । अतएवाहमनितरग तिः । इतरगतिशून्यस्त्वांकेवलंप्रपद्येइत्यर्थः । कर्मयोगात्म तत्वविचारेषुबुद्धिव्यवसायहीनस्त्वामेवशरणंव्रजइतिभावः

अन्वयः । हेअन्तरात्मन्मेआत्मानंपरिकरैस्सहत्वत्पदन लिनयोरद्यैवसमर्पयामि । अद्रिकन्याधिनाथशिवअहंत्वत्पदं बोद्धुंक्रियाःकर्तुंयोगचर्यामाचरितुंच अन्यद्यत्किंचित्कर्त्तुंचन शक्नोमीतिभावः । अस्यप्रस्तुतस्यात्मार्पणस्तवस्यतात्पर्यभु तोयंश्लोकः ॥ १५ ॥

अवतारः । नन्वेवंप्रपन्नेनत्वयाकिंलब्धव्यंपरमेश्वरेण वाकिंकर्त्तव्यमितिप्रश्नस्योत्तरभूतयाप्राचीनगाथयास्वाभि मतं व्यंजयन्विज्ञापयति ॥

मू० ॥ यस्स्रष्टारन्निखिलजगतांनि र्ममेपूर्वमीशस्तस्मै वेदानदितसकला न्यश्वसाकंपुराणैः ॥ तंत्वामाद्यंगु रुमहमसावात्मबुद्धिप्रकाशं संसारार्त्त इशरणमधुनापार्वतीशंप्रपद्ये ॥ १६ ॥

टी. यंईशःपूर्वस्सृष्टेःपुरानिखिलजगतांस्रष्टारंविधिंनिर्म मेसृष्टवानित्यर्थः । ननुविष्णुनाभिकमलाद्विधिर्बभूव । तस्य

फालदेशाद्रुद्रउदभूदितिश्रीभागवते दृश्यते । कथमकांडेरुद्रा द्विधिसृष्टिरितिचेदुच्यते । प्रकृतिर्विकृतिरितिसृष्टिर्द्विविधा । तत्रप्रकृतिसृष्टिः श्रुतिप्रसिद्धा । आत्मावाइदमेकएवाग्रआ सीन्नान्यत्किंचनमिषत् । सईक्षतलोकान्नुसृजाइति । आ त्मनआकाशस्संभूतः ॥ सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं तदैक्षतबहुस्यामिति । सर्वमिदंब्रह्मविष्णुरुद्रेन्द्रास्तेसंप्रसूय न्ते सर्वाणिचेंद्रियाणिचसहभूतैर्नकारणंकारणानांधाताकारणं तुध्येयइति । सोमः पवतेजनितामतीनांजनितादिवोजनितापृ थिव्याः जनिताग्नेर्जनितासूर्यस्यजनितेंद्रस्यजनितोतविष्णोरि ति । योदेवानांप्रथमंपुरस्ताद्विश्वाधिकोरुद्रोमहर्षिः ॥ हिरण्यग र्भंजनयामासपूर्वमिति । वामांगादसृजद्विष्णुंदक्षिणांगात्प्रजा पतिम् । मध्यतोरुद्रमीशानंत्रीन्पुत्रानसृजच्छिवइतिश्रीसनत्कु मारसूक्तेः । परमेश्वरादेवरुद्रविष्णवादिचेतनंमहदादिशून्यप र्यन्ताचेतनंचोत्पद्यते । प्रकृतिसृष्टिरियमेव । विकृतिस्तुपरमे श्वरपारमेश्वरशापानुग्रहाभ्यांविश्वामित्रादेरिवविष्णवादेरितर स्यापिसृष्टृत्वंसृष्टव्यत्वंवाभवतुनाम । अवान्तरकालेविधिवि ष्णूपरस्परजिगीषयातपसाशिवमाराध्यपरस्परंजनयामासतुः । विधेर्विष्णुनाभिसमुत्पत्तिप्रकारस्तु ब्रह्माण्डलैंगपुराणयोरेवं दृश्यते । तत्रतुहरिंप्रतिदेववचनं ॥ उमायासहरिस्साक्षाद्योहरि स्साशिवास्मृता ॥ प्रकृतिस्त्वंपुमान्रुद्रस्त्वयितद्वीर्यमाहितम् । त्व न्नाभिपंकजाज्जातः पंचवक्त्रः पितामहइति । इयंविकृतिसृ ष्टिरित्यर्थः । एवंरुद्राविर्भावः शिवपुराणेप्युक्तम् । सृष्टिसा मर्थ्यसिद्ध्येतपस्यतोविधेर्ललाटादाविर्भावः कथ्यते । लला टेचिन्तयन्ब्रह्मातपस्युग्रेव्यवस्थितः । तल्ललाटादभूच्छंभु

स्मृत्यर्थंतन्नदूषणमिति । नदूषणमितिवचनस्यतात्पर्यमिदम् । यथादाशरथिवासुदेवादीनां पुरुषवीर्यसंसर्गमातृगर्भवासनिर्हीनसुषिरनिर्गमनादिवद्दोषाभावाद्विशुद्धाध्यात्मा विमुक्तदेशात्स्तंभनरहरिवदाविर्भावमात्रान्नकिमपिदूषणमितिभावः । यश्चपरमेश्वरःतस्मैस्वसृष्टायब्रह्मणेसकलान्वेदान्पुराणैस्साकं चकारात्सर्वतन्त्रैस्सहेत्यर्थः । अदित । अदिशत् । संसारार्त्तोऽसावहंपार्वतीश्चमाद्यंगुरुं परमेश्वरस्यसर्वान्प्रत्यादिगुरुत्वंप्रसिद्धंश्रीपतंजलिनापिसूत्रितम् । "सपूर्वेषामपिगुरुःकालेनानवच्छेदादिति । तथाशिवपुराणेच । प्रतिसर्गप्रसूतानांब्रह्मणांशास्त्रविस्तरम् । उपदेष्टासएवासीत्कालावच्छेदवर्त्तिनाम् । कालावच्छेदयुक्तानांगुरूणामप्यसौगुरुरिति । यज्ञवैभवखण्डेगुरुपारंपर्यकथने । यश्शिवस्सर्वभूतानामीश्वरस्तएवतु । ईशानस्सर्वविद्यानांसएवादिगुरुर्बुधाः । तस्यशिष्योमहाविष्णुस्सर्वज्ञानमहोदधिः । तस्मादात्तपरिज्ञानोब्रह्मासर्वजगत्पतिः । सनत्कुमारोभगवान्ब्रह्मणश्श्रुतवेदनः । सनत्कुमारात्सर्वज्ञात्कृष्णद्वैपायनोमुनिः । अवाप्ताखिलविज्ञानस्तस्मादेतच्छ्रुतम्मया । इतितस्मादाद्यगुरुःपरमेश्वरएव । पाश्चात्यगुरुपरंपराविभिन्नाचश्रूयते । ब्रह्मादेवानांप्रथमस्संबभूवविश्वस्यकर्त्ताभुवनस्थगोप्तेति । भृगुर्वैवारुणिः । अथहैनंपैप्पलादोऽगिरास्सनत्कुमारश्चेति । तस्मादाद्यंगुरुंआत्मबुद्धिप्रकाशमानंतंप्रसिद्धंत्वांशरणंरक्षकंप्रपद्ये । अत्रसकलजगत्स्रष्टुर्वेदविद्याप्रदानेनआद्यगुरुत्वेनआत्मबुद्धिप्रकाशकत्वेनब्रह्मविद्यायाःपार्वत्याःपतित्वेनचनिहीनोप्यहंत्वदनुग्रहमात्रान्मुक्तो-भवेयमितिभावः । यईशःसकलजगतांस्रष्टारंपूर्वंनिर्ममे । यश्च

तस्मैनिखिलान्वेदान्पुराणादिभिःसाकमदित ॥ संसारार्त्तोऽ
सावहं पार्वतीशमात्मबुद्धिप्रकाशमाद्यंगुरुं तंत्वांशरणंप्रपद्ये ।
परिकरांकुरालङ्कारः ॥ १६ ॥

अवतारः ॥ नहिमादृशानेवमोहपाशादुन्मुच्यरक्षसीति ।
किंतुब्रह्मविष्ण्वादीन्सर्वान्पशूनपिपाशेनबध्वास्वकार्यंकारयि
त्वाचिरेणपाशान्मोचयित्वापासीत्याह । अत्रचतुर्थचरणोभ
गवत्प्रपदनंप्रतिपुरोक्तानांहेतुत्वात्काव्यलिंगंवा ॥

मू० ॥ ब्रह्मादीन्यस्स्मरहरपशून्मोह
पाशेनबध्वासर्वानेकश्चि दचिदधिकः
कारयित्वात्मकृत्यम् । यश्चैतेषुस्वप
दशरणान्विद्यया मोचयित्वासान्द्रान
न्दंगमयतिपरंधामतंत्वांप्रपद्ये॥१७॥

टी. । हेस्मरहरचिदचिदधिकःचित्ज्ञानंतद्वन्तश्चेतनाः ।
अचिदज्ञानम्महदादिशून्यांतजडंतदुभयविधस्य जगतोप्यधि
कः । श्रु । "विश्वाधिकोरुद्रोमहर्षिः" इति "एकएवरुद्रोनद्वि
तीयायनस्थुः" इति "सोब्रवीदहमेकः प्रथममासंवर्त्तामिचभ
विष्यामिनान्यःकश्चनमत्तोव्यतिरिक्तइति प्रातिभासिकस्यस
र्वस्यश्रीरुद्रोधिष्ठानमात्रःपारमार्थिकइतिभावः । एवंभूतश्चि
दचिदधिकएकोमुख्यार्थः केवलइत्यर्थः । यः ब्रह्मविष्णुशक्र
प्रभृतीन्सर्वान्पशून् । श्रु । येषामीशेपशुपतिः पशूनाञ्चतुष्पदा
मुतचद्विपदामितिश्रुत्यास्वेतरान् द्विपाच्चतुष्पात्पशून्सर्वानवि
शेषेणपाश्यंतेबध्यंते अनेनेतिपाशःमोहएवपाशः । तेनबध्वा

स्ववशान् कृत्वापुनस्तानात्मकृत्यंकारयित्वाआत्मनस्स्वस्य कृत्यमुपासारूपंकार यित्वायद्वाआत्मनांतेषांकृत्यंतत्तद्वर्णाश्र मविहितधर्मा न्कारयित्वायश्चएतेषुपशुषुस्वपदशरणाननन्यम नसाशिवैकशरणानतएवनिर्लज्जंनिर्भयंभस्मसंपादनतन्निष्ठाप रान्आशिरः पादमच्छाच्छभसितभास्वरान्महापाशुपतान्निज भक्तान्विद्यया शिवज्ञानदानेनमोच यित्वामोहबंधादुन्मुच्यसां द्रस्संपूर्णआनंदोऽस्यास्तीतिसांद्रानं दंपरंनिरतिशयंधामस्वरू पंगमयत्यवगमयति । अथवाआनंदेतिचतुर्थश्लोकानिगादि तसकलभुवनातीतपरशिवलोकंवागमयतिप्रापयति॥एवंपशुपा शुपतिलक्षणाम्युच्यंतेजाबाल्युपनिषदि । श्रु । कथंजीवास्सर्वे पशवस्सकथंतत्पतिरिसि॥तमुवाचयथातृणाशिनोविवेकहीनाः परप्रेष्याः कृष्यादिकर्मसुविनियुक्ताःपुनरतिदुःखभरास्स्व स्वामिबध्यमानागवादयस्तथेमे । सर्वज्ञईश्वरस्तेषांपतिःपशु पतिः । तानज्ञानपाशेनबध्नातितत्ज्ञानान्मोचयति । तत्ज्ञा नंकेनोपायेनेतिविभूतिधारणादेवेति । तथाचश्रुत्यंतरे ॥ तेषा मसुराणांतिस्रःपुरआसन्नित्यारभ्यअनन्यसाध्यपुरत्रयंजित्वा जगद्रक्षणात्पशुपतिस्त्वमेव॥ वयंसर्वेपशवइत्यंगीचक्रुस्सुराः॥ शैवपुराणे॥स्वतस्सिद्धंपतित्वम्मेयुष्माकंपशुतापिच । तदेवदर्श याम्यद्यपणबंधविनोदतइति । भारते ॥ आत्मानःपशवःप्रो- क्तास्सर्वेसंसारवर्त्तिनः । तेषांपतित्वाद्देवेशश्शिवःपशुपतिस्स्मृ तइतिकर्णपर्वणि ।पतित्वश्चापिमेलोकास्सर्वेकल्प्यतुपीडिताः। पशूनांवःपतिश्चाहंभविष्यामिसुरोत्तमाः । इतिदेवावचश्श्रु त्वादेवदेवस्यशूलिनः ॥ विषादमगमन्सर्वेपशुत्वं प्रतिशङ्कि ताइति। एवमादिप्रमाणैःपरमेश्वरस्यपतित्वंतदन्य स्यसर्वस्य

पशुत्वंचसिद्धवत्कृत्यमोहपाशेनतान् बध्वाआत्मकृत्य ङ्कारयि त्वाचतेषुपशुषुप्रपन्ना न्विघयामोचयित्वासांद्रानंदंपरंधामप्रत्य गात्माभिन्नब्रह्मस्वरूपंगमयत्यवप्रमयतीतिभावः ॥ १७ ॥

अन्वयः । स्मरहरचिदचिदधिकोयएकस्सन्ब्रह्मादी न्सर्वा न्पशून्मोहपाशेनबध्वातानात्मकृत्यंकारयित्वायश्चैतेषु स्वपदशरणान्विद्यायामोच यित्वायोजयित्वेतिपाठांतरंसांद्रा नंदंपरंधामयोगमयतितंत्वांप्रपद्ये ॥

मू० ॥ ध्यातोयत्नाद्विजितकरणैर्योगि भिर्योविमृग्यस्तेभ्यःप्राणोत्क्रमणसम येसन्निधायात्मनैव । तद्व्याचष्टेभवभ यहरंतारकंब्रह्मदेवस्तंसेवेहंगिरिशस ततंब्रह्मविद्यागुरुंत्वाम् ॥ १८ ॥

टी. हेगिरिशविजितकरणैर्विजितानिकरणानिस्वभावा त्पराङ्मुखानियैस्तैर्निशितकरणैरितिपाठांतरंयोगिभिः शिव तत्वावाप्त्युपायभूतध्यानयोगएषामस्तीतितथोक्तैर्योगिभिर्यो विमृग्यःमृगयितुमन्वेष्टुंयोग्यःध्यातश्चतत्रप्रत्ययैकतानताध्या नमितिपातंजलसूत्रात्संततमनन्यवृत्त्या धियाध्यातश्चभवतीति शेषः । यश्चदेवस्तेभ्योयोगिभ्यः प्राणोत्क्रमणसमयेमुख्यप्रा णस्योत्क्रमणमुत्क्रांतिः शरीरादूर्ध्वगतिः । तत्समयेआत्मनैव स्वेनैवसन्निधायआत्मनैवेत्यवधारणाद्यथादक्षिणदेशवैषम्यस मीकरणार्थंस्वसमानंकुंभजमुनिं॥ महाविषहरणायसुंदरदासधा म्रास्थापयदीश्वरः । तथातारकोपदेशाययंकंचिन्माहिणोदिति

न। किंतुस्वेनैवाप्राकृतनिष्कलस्वरूपेणैवेत्यर्थः। सन्निधाय साक्षात्कृत्य भवभयहं संसारभीतिनिवर्त्तकं अतश्चतारकं गर्भ जन्मजरामरणसंसारमहद्भयात्तारयतीतितस्मादुच्यते तारमित्यथर्वशीर्ष निर्वचनात्तारकं तत्प्रसिद्धं ब्रह्माखण्डात्मचैतन्यं व्याचष्टे। विस्पष्टमुपदिशति उपदिश्यपशून् भवदुःखान्मोचयतीत्यर्थः। अहंतमेवब्रह्मविद्यागुरुं त्वां सेवे भजामीत्यर्थः। आत्मनैवेत्येवकारस्वारस्यमेवमूह्यम्। मरणसमयेयोगिनामेवब्रह्मनाडीमार्गेणात्मानं ब्रह्मरन्ध्रं नीत्वा ब्रह्मादिभवनानिगंतुंपुनरागंतुं वा। तत्रद्वादशांतपदे स्वात्मानं निरुध्यनिरंशध्यानयोगं काष्ठपाषाणवत्कर्तुं लिंगशरीरं तप्तायः पिण्डनिक्षिप्तजलबिंदुवत्समाप्य घटाकाशमहाकाशवदखण्डसच्चिदानंदरूपमवाप्तुं चशक्नोति॥ यत्राध्यातॄणाम्मरणकाले सर्वप्राणानां पारवश्याच्छिवध्याने शिवाह्वाने शिवपूजने शिवस्तोत्रे वाप्यधिकाराभावात्कृतध्यानानामस्माकं विनष्टिरेव भवेद्वेतितद्भीतिनिवारणाय सर्वज्ञः कृपानिधिः कृतज्ञश्चपरमेश्वरः केनाप्यनाहूतएवसन् स्वात्मनैवसन्निधायतारकंब्रह्मव्याचष्टे इतिभावः। श्रु। ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तुतंपश्यतेनिष्कलंध्यायमानः॥ आत्मानमरणिंकृत्वाप्रणवंचोत्तरारणिं॥ध्याननिर्मथनाभ्यासाद्देवंपश्येन्निगूढवदिति। मुक्तिखण्डे। यत्रकुत्रापिनिहीनदेशेस्थितानामप्युपासकानां विशिष्टशिवस्थानेषुयथेच्छन्निवसतांचशंभुस्तारकंमृतेसमुपदेक्ष्यतीतिदृश्यते। यानिकर्माणिबाह्यानिमरणादूर्ध्वमच्युत॥ममज्ञानप्रदानीतिकथितानिमयातव॥ तानिकल्याणवृत्तस्यविद्धिनान्यस्यकस्यचित्। पापिष्ठानामपिश्रद्धाविहीनानांजनार्दन॥मुक्तिदम्मरणादूर्ध्वंशिवक्षेत्रेषुवर्त्तनम्। पुराकोलाहलो

नामवृषलोविधिचोदितः। कामेनपीडितस्स्वस्यपितरंपंकजेक्ष
ण॥हत्वामातरमादायगत्वामोहेनकेशव। वेदारण्येयथाकामंच
रित्वामरणंगतः। तत्रवर्त्तनमात्रेणसपुनःपुरुषाधमः। प्रणष्ट
पापश्शुद्धात्मावेदारण्यपतेर्मम। प्रसादादेववेदांतज्ञानंलब्ध्वा
मृतोभवदिति। तस्माच्छ्रद्धयाध्यानवतान्निष्कामानांविशुद्धा
नांतत्तच्छिवक्षेत्रमानेशिवप्रसादंविश्वस्यस्वच्छंदंनिवसतामपी
श्वरस्तारकपूर्वकंमुक्तिददात्येवेतिभावः। तस्मादन्यत्रवशी
कृतमनसांध्यायिनामेवशिवज्ञानं भवेत्। शिवस्थाननिवासि
नांस्वैराचारएवशिवार्चापिभवतीतिभावः।

अन्वयः। गिरिशविजितकरणैर्योगिभिर्यत्नाद्ध्यातो
विमृग्यश्चयोदेवस्तेभ्यः प्राणोत्क्रमणसमयेआत्मनैवसन्निधाय
भवभयहरंतारकंतत्ब्रह्मव्याचष्टे। अहंतंदेवंब्रह्मविद्यागुरुत्वा
मेवसेवे॥ १८॥

अवतारः। नन्वमर्त्यावहवस्संति। तान्व्युदस्यकथम्मा
मेवशरणंवृणीषेइत्यत्राह॥

मू०॥ भक्ताग्र्याणांकथमपिपरैर्यो
चिकित्स्यामम्मर्त्यैस्संसाराख्यांशमयति
रुजंस्वात्मबोधौषधेन। तंसर्वाधीश्वर
भवमहादीर्घतीव्रामयेनक्लिष्टोऽहं त्वांव
रदशरणंयामिसंसारवैद्यम्॥ १९॥

टी. हेसर्वाधीश्वरसर्वेभ्योद्धुयपरिईश्वरनिग्रहानुग्रहाविच
क्षणभक्ताग्र्याणांमहा शिवभक्तानामग्रेभवंतीतिभक्ताग्र्याणांते

षांपरैरन्यैरशिवैः यद्वापरैःश्रेष्ठैर्देवानाम्मध्येप्रसिद्धैरितिवाय थाकथंचिदीश्वरादन्यैरनीश्वरैरित्यर्थः । तैरचिकित्स्यांचि कित्सयारोगन्निवर्तयितुमशक्यां संसाराख्यांरुजंयस्वात्मबो धौषधेनशिवज्ञानमहौषधदानेनशमयतिसमूलमुन्मूलयति हेवर दभवमहादीर्घतीव्रामयेभवतीतिभवःसंसारः सएवमहान्दी र्घस्तीव्रश्चामयोयस्यसः । आमीनातीत्यामयः । मीङ्हिंसा यांताद्विशिष्टअस्मिन्देहादौक्लिष्टोहंसंसारवैद्यंविद्यामायुर्वेदस्वयं चवेदेतिपरांश्चवेदयतिचसंसारवैद्यस्तं । श्रु । अध्यवोचदधि वक्ताप्रथमोदैव्योभिषक् । मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टु तीवृषभमासहूती । उन्नोवीरां अर्पयभेषजेभिर्भिषक्तमन्त्वाभि षजांश्रुणोमीति । तस्मात्संसारवैद्यंत्वामेवशरणंयामीत्यर्थः । अयंभावः इतराचिकित्स्यदीर्घतीव्रमहाभवरोगक्लिष्टोहंसाक्षा त्संसारचिकित्सकंत्वां विनाकमन्यंभवपीडितंदेवंशरणंयास्या मीतिभावः। तथाचार्याशतके।। घोरंभवमपहातुंकेचिदघोरंभवं मपद्यंते । संसरणकातराणांसंसरणिश्शांभवीभक्तिरिति । श्रीभगवत्पादाश्च।।जननमृतियुतानांसेवयादेवतानांनभवतिसु खलेशस्संशयोनास्तितत्र । अजनिममृतरूपंसांबमीशंभजंतेय इहपरमसौख्यंतेहिधन्यालभंतेइतिशिवानंदलहर्य्याम् ।। त स्मात्संसृतिरोगमाशुप्रशमयेत्यर्थः । देवपुनःपुनरुक्तार्थमेववि ज्ञापयितुंलज्जीभूयेतस्मात्कारुण्यादेवमांपाहीत्याह ।। १९ ।।

मू० ।। दासोस्मीतित्वयिशिवम  
यानित्यसिद्धंन्निवेद्यमजानास्येत  
त्त्वमपियदहान्निर्गतिस्संभ्रमामि ।

नास्त्येवान्यन्म मा किमपि तेनाथ,
विज्ञापनीयम् कारुण्यान्मेशरण
वरणंदीनवृत्तेर्गृहाण ॥ २० ॥

टी. हेशिवस्वप्रकाशत्वयित्वत्सन्निधौ अहंदासोस्मि । त्वम्मत्स्वामीतिचनित्यासिद्धंचिरकालप्रसिद्धमेवतात्पर्यम्मया निवद्यंनिवेदयितुंयोग्यंभवति । नित्यसिद्धत्वात्तज्जानास्येव । मामयंरक्षिष्यत्यन्योवेतिनानागोपुराशिखराश्वत्थपीठविशेषेषु सर्वतः कृतांजलिस्संभ्रमामीत्येतदपिजानास्येवपाशबद्धपक्षि वदुड्डीयोड्डीयपरितोटित्वापतित्वापुनः पुनर्बद्धस्तंभवत्त्वामे वागतिश्शरणंवृणोमीत्येतदपिजानासि । नाथममाविज्ञापनीयं किमप्यन्यन्नास्ति । बद्धस्यपरतन्त्रस्यपशोस्तप्तांकेनअंगकंप वत्परितोटनन्नदोषायभवेदितिचजानासि । तस्माद्दीनवृत्तेर्मे मशरणंशरणप्रदानरूपानुग्रहंकारुण्यादेवस्वीकुरुष्व । गृहा णेत्यर्थः । हेनाथअनवगतार्थविज्ञापनस्यानवकाशाद्विदिता र्थयाञ्चायाः पल्लवितोक्त्याचकरुणयाकेवलंरक्षणीयोऽयमिति स्मरेतिप्रार्थये ॥ ननु ॥ दासोस्मीतित्वयिशिवमयानित्यसिद्धं निवद्यमितियदुक्तंनैतदुपपद्यते ॥ पशुपतिपाशभेदानित्याएवे तिशैवागमाः ॥ श्रीमद्दीक्षितचरणोवैदिकसार्वभौमइतिप्रसि द्धिश्चास्ते ॥ तेननाद्वैतभंगवादःकार्यइतिचेन्न ॥ पारमार्थिक मद्वैतंनकदापिभज्यते ॥ तथापिविज्ञानात्मनएवदेहाद्युपा धिसंपर्कवशात् कलुषीभूतस्यध्यानादिसाधनानुष्ठानात् संप्र सन्नस्यदेहादिसंघातादुत् क्रमिष्यतः परमात्मनैक्योपपत्तेः । अनेनजीवेनात्मनानुप्रविश्यंतिश्रुतेः । एषसंप्रसादोस्माच्छरी

रात्समुत्थायपरंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यतेइति ॥ यथानद्यस्स्यंदमानास्समुद्रस्तंगच्छं तिनामरूपेविहायेतिदृष्टांत श्रुतेश्चव्यावहारिकौभेदाभेदौवर्तेतेएव ॥ परमार्थतस्तुश्रुतौते जःप्रभृतिपदार्थसृष्टिकथनेअन्यत्रवाजीवसृष्टि श्रवणाभावात् जीवोनित्यः परमात्मैवनैवभिद्यतेतदादावेवमूर्खस्यास्यजगत स्त्वमेवशिवइतिपरमाद्वैतोपदेशेनसद्यः कर्मोपासनज्ञानकांडत्र यबहिष्कृतोधः पतेदेव ॥ तस्मात्क्रमेणगंतव्योमार्गः कविना प्रदर्शितइतिसर्वंसमंजसम् ॥

मू० ॥ ब्रह्मोपेन्द्रप्रभृतिभिरपिस्वे प्सितप्रार्थनायस्वामिन्नग्रे चिरमवसर स्तोषयद्भिःप्रतीक्ष्यः । द्रागेवत्वांयदि हशरणंप्रार्थयेकीटकल्पस्तद्विश्वाधीश्व रतवकृपामेवविश्वस्यदीने ॥ २१ ॥

टी. हेविश्वाधीश्वरविशतिसर्वमास्मिन्नितिविश्वंतस्य स र्वस्याधीश्वरस्वामिन्तोषयद्भिस्तुतिभिस्सन्तोषयद्भिःब्रह्मोपेन्द्र प्रभृतिभिः विधिविष्णुशक्रमुखैरपिस्वेप्सितप्रार्थनायस्वस्यस्व स्येप्सितानिस्वेप्सितानि ब्रह्मणःपुनःपुनस्सृष्टिसामर्थ्यसिद्ध येविष्णोर्दुर्वासोमुनिशापप्रच्छन्नायाः बृन्दासक्तपतिकुपिताया लक्ष्म्याःपुनरवाप्तिवांछया॥शक्रस्यवृत्रादिशत्रुवधार्थवरुणादेः शापादिनिवृत्त्यथच स्वस्वेप्सितप्रार्थनायतोषयद्भिस्संस्तुवद्भिस्त वाग्रेश्रीकैलासदक्षिणकैलासश्रीवांछस्थानकोणेषुदूरतास्थित्वा चिरमवसरःत्वत्प्रसादसमयःकदाभवेदिति । कदावाप्रथाम

मार्गेमह्यंप्रसीदेयुः । शुभशंसिश्रीशैलादिविलोचनापांगोऽस्मा सुकदावानिपतेत् । परमेश्वरस्यभूवनाविहारःकदाभविष्यती तिचसमयःप्रतीक्ष्यः सत्येवंकीटकल्पःकीटसमानोऽहंइहभव दुःखविषयेतथाभूतंत्वांद्राक्क्षिप्रमेवशरणं । रक्षणलक्षणंप्रार्थय इतियत् । तत्तवकृपांदयांदीनएवोतिविश्वस्यविस्रंभंकृत्वातथा प्रार्थयेइतिभावः ॥ २१ ॥

मू० ॥ कर्मज्ञानप्रचयमखिलंदुष्कर
न्नाथपश्यन्पापासक्तंहृदयमपिचापा
रयन्सन्निरोद्धुम् । संसाराख्येपुरहर
महत्यंधकूपेविषीदन्हस्तालंबप्रपत
नमिदंप्राप्यतेनिर्भयोऽस्मि ॥ २२ ॥

टी. हेनाथत्वदनुग्रहायकर्म॥योगो॥ज्ञानंवा॥समभ्यसनीय म्॥तत्कर्मज्ञानादिसन्दोहमखिलंदुष्करंदुःखेनापिकर्त्तुमशक्यं पश्यन्नस्मि । किंचपापासक्तंपापेषुदुष्कर्मस्वासक्तंस्नेहयुक्तंहृद यम्मनस्सन्निरोद्धुंअंतरेवसदास्थापयितुंचाधारयन्नशक्नुवानो- ऽस्मि । पुरहरसंसाराख्येसंसरंत्यत्रेतिसंसारः सइत्याख्या यस्यतस्मिन्नंधकूपेकुत्सिताआपोस्मिन्निातिकूपःतस्मिन् । अं धत्वविशेषणेनअतीवनिम्नदेशःकर्दमकण्डकवल्लीसंच्छन्नःशब्द प्रतिशब्दाद्यनवकाशदोषयुक्ताधोदेशश्चयस्यतस्मिन् संसारा ख्येअंधकूपेकेनापिहेतुनानिपतितोभवम् । मामेवंविधंनागरि कःकोवाजानन् । कदावोद्धरिष्यतीतिविषीदान्निवासम् । अथताहशोऽहंकेनापिपुण्यवशेनाद्यतेहस्तालंबप्रपतनमिदंहस्ता

लैव: अत्र लंबसाधनहस्तस्तस्यप्रपतनंजलाहरणरज्जुवदधोनि-स्सृतंहृदयदेशविभासमानं त्वत्स्वरूपसाक्षात्काररूपंइदंप्राप्यइ दमितिस्वानुभवरीतिमभिनीयदर्शयन्नाह । तेहस्तालंबप्रपत नमिदंप्राप्यनिर्भयोस्मीतिभाव: । कथंचिन्ममदास:संसारां धकूपेपतित्वाचिरंविषीदति । तस्यगत्यन्तराभावान्ममहस्ता वलंबनात्मकं संशयविपर्यासरहितंचिदानन्दरूपोऽहमस्मीत्य नुभवरूपमिदं शिवभजनंप्राप्यसमुत्तीर्णोभवेदितियस्मान्मयि दयाद्यजातातस्मान्निर्भयोऽस्मीतिभाव: । रूपकालंकार: २२

अवतार: । यद्यपिहृदयारविंदे अकस्मात्सच्चिदानन्दपर शिवस्साक्षात्कृतएव । अधीहिभगवोब्रह्मेत्यादिवेदमर्यादां विनैवतूष्णींस्थितस्यममापि शिवसाक्षात्कारोऽद्ध तएवासीत्त थापितद्दार्ढ्यायमद्विस्रंभायच श्रीमूलगुरुदीक्षयानुग्रहोलब्धव्य इतिदेवंस्तौति ॥

मू०॥ त्वामेवैकंहतजनिपथेपान्थ
मस्मिन्प्रपंचेमत्वाजन्मप्रचयजलधेर्बि
भ्यतःपारशून्यात् । यत्तेधन्यास्सुरवर
मुखंदक्षिणंसंश्रयन्तिक्लिष्टं घोरेचिरमि
हभवेतेनमाम्पाहिनित्यम् ॥ २३ ॥

टी. हेसुरवरदेवशिखामणेहतजनिपथेअतिकष्टजनिमृति मार्गवति अस्मिन्प्रपंचेहतजनिपथेजनेःपन्थाजनिपथःहतः क्लि ष्टोजनिपथोहतजनिपथस्तस्मिन्नस्मिन् प्रपंचेऽस्मिन्नितिपदेन जनिपथनिन्दासूच्यते । त्वामेकमेवपशोर्जीवस्यसंसरतःस

हायभूतंपान्थंपन्थानंगच्छती तियान्थम्मत्वाजीवोगर्भनरकस्व र्गादिकंयद्यद्यातितत्तच्छिवोपिमार्गबन्धुस्सन्यातीत्यर्थः।श्रु। ऋतंपिबन्तौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्द्धे। द्वासुपर्णासयुजासखायौसमानंवृक्षंपरिषस्वजाते। सूत्रम्। गुहांप्रविष्टावात्मानौहितद्दर्शनादिति । पात्मेच । यथाराहुरदृश्योपिदृश्यते रविमण्डले। तद्वत्सर्वगतोप्यात्मालिंगदेहेतुदृश्यते। नीयमाने यदाकुंभेघटाकाशोऽपिनीयते । तद्वत्सर्वगतोऽप्यात्मालिंगदेहेविनिर्गते । निश्चलःपरिपूर्णोऽपिगच्छतीत्युपचर्यत इति। तस्मात्संसारमार्गेषु संचरतांमार्गेषुसंसरतांपशूनांतत्रतत्रपान्थं पथिसहायभूतंत्वामेकमेवमत्वाचिर्तिं विनातदाभासस्यानवस्थितेःसदासुस्निग्धवत्सहायंपान्थम्मत्वापारशून्यादपाराद्भवसागरस्यभवप्रसादमेकं विनाऽनिवृत्तेरपारत्वविशेषणंयुक्तमेव। तादृशाज्जन्मप्रचयजलधेर्बिभ्यतः भवभीरवोधन्याः सनकसनन्दनभरद्वाजमुनिमुखाःपंचमुखारविंदस्यतेरौद्रमघोरं यद्दक्षिणमुखंसंश्रयन्तिअत्रवर्त्तमान क्रियापदेनकैवल्यमुक्तिमपिकरस्थांबुध्वापि श्रीगुरुमूर्त्तिदर्शनानन्दानुभवद्रष्टास्वादा स्सन्तो लोकहितायवाद्या.पेसमाश्रयन्तीतिभावः। नाथतस्मादिहघोरेभवेचिरं क्लिष्टम्मांतेनैवमुखेनपाहीति अनेनश्रौतमार्गावलंबनंपूर्वाचारानुसरणंचासिध्येदितिगम्यते। श्रु। अजातइत्येवं कश्चिद्भीरुःप्रपद्यते । रुद्रयत्तेदक्षिणम्मुखंतेनमांपाहिनित्यमिति। किंच ॥ येनास्यपितरोयातायेनयाताःपितामहाइति न्यायेनकुलकूटस्थस्यभरद्वाजमुनेः शिवस्याघोरमुखेनैवशिवज्ञानदीक्षोपलब्धेस्तेनैवमुखेनमांपाहीति एवंयदिश्रुत्यनुग्रहपूर्वकपूर्वाचारःसमाश्रितोभवेत् । अन्यथाश्रुत्यननुग्रहपूर्वाचारमात्र

स्यमौर्ख्यवादापत्तेः। दक्षिणमुखेनमांपाहीतिभावः ॥२३॥

अवतारिका। भक्तस्त्वतवमयैतावत्साधितम्। इतःपश्चा दप्यपेक्षसेचेत्। सन्तिहिसुरास्तानाश्रित्यस्वेप्सितमाप्नुहीति चेन्न। त्वत्प्रपन्नस्यान्यानुसरणन्नरोचतेसचकश्चिदन्योऽपि नास्तितस्मात्प्रपन्नंमांपाहीत्याह ॥

मू०॥ एकोसित्वंशिवजनिमतामी श्वरोबन्धमुक्त्योःक्लेशांगारावलिषुलुठ तःकागतिस्त्वांविनामे। तस्मादस्मिन्न पिपशुपतेघोरजन्मप्रवाहेखिन्नंदैन्या करमतिभयम्मांभजस्वप्रपन्नम् ॥२४॥

टी। शिवजनिमतांबद्धमुक्तयोरीश्वरःकर्त्तात्वमेकएवा सि। त्वत्तोऽन्येसर्वेप्यनीश्वराएवेत्यवगम्यते। नुन॥श्रुतिभारता दावीशशब्दोविष्ण्वादेरपिदृश्यतेतथाहिभगवद्गीता। तस्मात्प्र णम्यप्रणिधायकायंप्रसादयेत्वामहमीशमीड्यमित्यादि बहुस्थ लेष्वीश्वरशब्दश्रवणात्कथंभवएवेश्वरशब्दो ऽस्तीत्यत्रोच्यते। याकाचिन्निग्रहानुग्रहशक्तिर्यत्रयत्रास्तेतेपीश्वरवाच्याजनेश्व रयोगीश्वरादिवद्भवंति॥साक्षात् सर्वेश्वरत्वंतुहरएवेत्यवगम्य ते। श्रु। तमीश्वराणांपरमम्महेश्वरंतंदेवतानांपरमंचदैवतम्। पतिंपतीनांपरमंपुरस्ताद्विदामदेवंभुवनेशमीड्यमित्यादि। भार ते॥ईश्वरश्चेतनःकर्त्तापुरुषःकारणंशिवः॥ विष्णुर्ब्रह्माशशीसू र्यश्शक्रोदेवाश्चसान्वयाः। सृजतेग्रसतेचैतान्तमोभूतमिदं यथा॥ पुराणेच॥ हरिर्यथैकःपुरुषोत्तमस्मृतोमहेश्वरस्त्र्यंबक

एवनापरइति । कालिदासश्च । शब्दमीश्वरइत्युच्चैस्सार्द्धचंद्रं बिभर्त्तियः । अमरकोशे । ईश्वरश्शर्वईशानश्शंकरश्चंद्रशेखर इति । अपिच । न्यायोपबृंहणंशास्त्रम् । ईश्वरांशस्यभूय स्त्वाद्रुद्रस्येश्वरताभवेत् । अल्पांशत्वाच्चविष्ण्वादेर्न्नेश्वरत्वंव्य वस्थितं ॥ ईश्वरांशास्तथाज्ञेयाविष्णुब्रह्मादयस्सुराः । यथा काशांशभूयस्त्वादाकाशमितिगीयते ॥ आकाशांशाल्पभागि त्वाद्वायुर्न्नाकाशशब्दभाक् । एवमीश्वरशब्दार्थोमायावीहि त्रिलोचनः । विष्ण्वादावंशलेशत्वादीशत्वंगौणमेवहि । पशु शब्दोयथापाशावयवेषुप्रयुज्यते । वनग्रामादिशब्दानामेकदेश प्रवृत्तिवत् । एवमीशादिशब्दानांविष्ण्वादौवर्त्ततांसुखं । एकएवहिमुख्योयमीश्वरश्रुतिचोदितः । इतिन्यायेनान्ये षांगौणेश्वरत्वंवर्त्तताम्नाम । ततस्त्वमेवेश्वरइत्यर्थः । क्लेशांगारावलिषुउक्तंश्रीविद्यारण्यमुनिभिः । क्लेशाश्चतुर्वि धाश्शैवशास्त्रेषुप्रतिपादिताः॥मलोमायाकर्मतत्व तिरोधानंचते मताः । मलोज्ञानक्रियाशक्त्याच्छादकोदोष इष्यते । रागादिहेतुर्मायोक्ताकर्मपुण्यंचपातकम् । मूढैस्तत्वतिरोधानं सर्वैरप्यनुभूयत इति । पातंजलमतेतुअविद्यादिरस्मितारागो द्वेषोभिनिवेश इति। पंचवा ॥क्लेशाएवांगारानिर्गतज्वालाग्नि खण्डाः तेषामावलिषुलुठतोमेममाखिलरक्षकंत्वांविनाकागति रस्तिनकापीत्यर्थः । तस्मादस्मिन्नपिघोरजन्मप्रवाहेअतिभयं करजन्मप्रवाहेअस्मिन्मानुष्येजन्मन्यपिखिन्नंदैन्याकरं दैन्यानि धिंअत्यन्तघृणास्पदमित्यर्थः । अतिभयम्मां ॥दैवाल्लब्धम्मानु ष्यंजन्म । इदानीमपिष्टथास्मिचेत्परंभाविकथंभविष्यतीतिभी तियुक्तंअतएवप्रपन्नमांभजस्वशीघ्रमागत्यरक्षत्राहीत्यर्थः ।२४

अवतारः। ननुत्वदनुग्रहःकेनदेवेनकयावारीत्याकार्य इत्यत्राह ॥

मू०॥ योदेवानांप्रथममशुभद्रावको भक्तिभाजांपूर्वंविश्वाधिकशतधृतिंजाय मानम्महर्षिः ॥ दृष्ट्यापश्यत्सकलज गतीसृष्टिसामर्थ्यदात्र्यासत्वं ग्रंथिप्रवि लयकृतेविद्ययायोजयास्मान् ॥ २५ ॥ ग्रन्थि

टी. हेविश्वाधिकविश्वस्माद्ब्रह्मादुपरिविश्वाधिकः महांश्च सौऋषिश्चमहर्षिः। सर्वंस्वयंजानातीत्यर्थः। ऋषगतिज्ञान योरितिधातुः। भक्तिभाजांशिवसेविनांअशुभद्रावकःअशुभा निसंसारसमुत्पन्नानिदुःखानिद्रावयतिविनाशयतीत्यशुभद्राव कोरुद्रइत्यर्थः।विश्वाधिकोरुद्रोमहर्षिःभक्तिभाजामशुभद्रावको यईशः। देवानांप्रथमंपुरस्तादग्रेशिवसंकल्पमात्रेणजायमानं प्रतिकल्पमुत्पद्यमानं शतधृतिंदेवमानेनद्वादशचतुर्युगसहस्रका लंपरार्धद्वयकालमानंवाविधेः शतवर्षाणिस्वजीवितमीशाज्ञया धत्तेइति शतधृतिस्तंसकलजगतीसृष्टिसामर्थ्यदात्र्यादृष्ट्यास कलाचसाजगतीचसकलजगती। तस्या स्सृष्टेस्सामर्थ्यंकौश लंददातीतिसकलजगतीसृष्टिसामर्थ्यदात्रीतयादृष्ट्याऽपश्यत्। ननु॥भगवान्संकल्पेनविधिंससर्ज।पश्चात्सतुकिंचिकीर्षयाऽप श्यत्उच्यते। सकलजगतीसृष्टिसामर्थ्यदात्र्येत्युक्तंविस्तृतं किं॥सकलजगत्सृष्टेर्गुरुकार्यत्वात्तर्हिमत्तः कस्यचिदपिबोधक

स्याभावात्दीक्षानिमित्तमवलोकइत्यर्थः । अत्रमांत्रिकी स्पा
र्शिकीचाक्षुषीचेतिदीक्षात्रयंवैदिकानां प्रसिद्धमपिकेचन वैदि
कब्रुवानास्माकंदीक्षेतिवदंति । वेत्तारोपितेतत् ग्रंथान्नविम
र्शन्तइतिवा॥उक्तंस्कांदेहिमाचलखण्डे॥दीक्षाशब्दोनिरुच्यते।
दीपनादात्मबोधस्यक्षारणात्तमसोस्यच । दीक्षाशब्देनकथि
तंगुरोस्साक्षान्नराक्षणमाते । तदेवविशदयातिपरशुरामसूत्रे॥च
क्षुरुन्मील्ययस्तत्वंध्यात्वाशिष्यं समीक्षते । पशुपाशविमोक्षा
यदीक्षेयंचाक्षुषिमता ॥ पुनस्पार्शिकीमांत्रिकीतिदीक्षाद्वयम्मदु
क्तसूत्रपुजाविधौकाथितंद्रष्टव्यम् ॥ पुरुषार्थबोधेतु ॥ ददाति
शिवतादात्म्यंक्षिणोतिचमलत्रयम् ॥ अतोदीक्षेतिसाप्रोक्ता
दीक्षाशब्दार्थवेदिभिः । त्रिविधासाभवेदीक्षाप्रथमात्वाणवी
परा ॥ शाक्तीतुशांभवीत्वन्यासद्योमुक्तिविधायिनी ॥ आण
वीबहुधादीक्षाशाक्तीदीक्षाचशांभवी॥एकैकयेतिविद्वद्भिःपठ्य
तेशास्त्रकोविदैः॥स्मार्तीचमानसीचेतिचाक्षुषीस्पार्शिकीतथा॥
वाचिकीचतथाहौत्रीशास्त्रीचेत्याभिषेचिकी ॥ एवमुक्तानेक
विधाशैवीदीक्षाविचक्षणैः॥ यासामद्ध्येतुहौत्र्याख्याकुंडमंडल
मंटपैः ॥ युक्तावैदिकनिष्ठैस्सादिक्षात्याज्यैवसर्वथा ॥ वाचि
क्यादिष्वपिसमामंडलंमंटपंतथा ॥ अत्र ह्यतमत्वाच्चशिवाज्ञा
भंगभीतितः ॥ समस्तदीक्षास्वरूपन्नमयासंप्रदर्शितमिति ॥
एवंभूतयाद्रष्टयायोऽपश्यत् । सतादृशः ब्रह्मदेवस्यापिगुरुः
सत्वंममग्रन्थिप्रविलयकृतेकृतेऽर्थेनिमित्तमिति । नि । ब्र
ह्मविष्णुरुद्रग्रन्धीनांप्रविलयनिमित्तम् । अस्मान्त्वदधीनान्वि
द्यया शिवज्ञानेनयोजयसंयोजय प्रतिपादितेऽर्थेश्रुतिश्च । योदे
वानांप्रथमंपुरस्ताद्विश्वाधिकोरुद्रोमहार्षिः । हिरण्यगर्भपश्य

तिजायमानंसनोबुध्याशुभयासंयुनक्त्विति । अत्रश्रुतिगतरुद्र शब्दमग्रहीदशुभद्रावकइति । रुद्रशब्दएवन्निरुच्यते । रुत्या स्त्वाग्रूपयाश्रुत्या अधर्मादीन्द्रावयतीति । रुत्याश्रुत्याधर्मंस दाचारंबोधयतीति॥रुतंवेदसमूहंकल्पादौब्रह्मणेददातीति । रु तिनादान्तेद्रवतिद्रावयति रंजयतीतिच॥रुधिर आवरणइतिधा तोरज्ञानमविद्यांद्रावयतीति सर्वमन्तकालेसकलसंहारकतमोगु णग्रहणेनरोदयतीतिचरुद्रशब्दोनिष्पन्नः । स्वयंरुदतीतिरुद्रश ब्दस्तुदेवासुरास्संयत्ताआसन्नितिश्रुत्यैवाग्निपरतयाव्याख्या तत्वान्नमूर्खवादावकाशः । नन्वेवंभूतोऽपिश्रीरुद्रःस्वसृष्टानेव सर्वान्तमोगुणमधिष्ठायसंहरति । अनेननैर्घृण्येनकर्मणातस्य वान्यस्य किंप्रयोजनंभवतीतिचेदुच्यते । नहितस्यकिंचिदपि नैर्घृण्यमस्तिप्रयोजनंवा । किन्तुघृणैवक्रियते । पशूनाम्महत्प्र योजनंच॥तथाचशिवपुराणम् । निदानज्ञस्यभिषजोरुग्णोहिंसां प्रयुंजतः । नकिंचिदपिनैर्घृण्यंघृणैवात्रप्रयोजिकेति । अस्या र्थः । यथागलपिलकार्दितस्यअशननिद्रादिविहीनस्यसततंहा हेतिक्रंदमानस्यदयालुः कश्चिन्महाभिषक्तत्सुखचिकीर्षया स्वयमभ्युपेत्यस्नुहि पत्रनिभसूक्ष्मशस्त्रेणव्रणलोलकीटपूयादि निस्सार्यपुनरौषधंविनिक्षिप्यतस्यरोगिण स्सुखनिद्राभ्यवहा रादिदापयति यथावानिदाघेपांसुक्रीडापरम्मूर्खंबालकंजननी प्रशास्यस्तन्यन्दत्वामंचमारोप्यनिद्रापयतितद्वत् । श्रीरुद्रस्सं सारयातायातचिरपरिश्रांतान् जंतून्दीर्घसुप्तिसुखचिकीर्षया तमोगुणोपाधिकस्सन् सुचिरंसुखयत्येव । पुनःप्राणिकर्मपरि पाकवशात्पुनस्तानुत्पाद्य भोगानददातीति शैवसिद्धांतसारे । विश्रांत्यैभविनांचखिन्नमनसांपाकायकर्मावले मायावाग्बल-

संभवायकुरुतेशंभुर्महासंहृतिम् । शिष्यतेपशवस्सशक्तिरमल श्शंभुश्चमायाद्वयं सृष्ट्याद्यंकुरुतेततश्चदययाभोगायपुंसांपुनरिति। एवंश्रीरुद्रःपशूनांदययासुखंददाति। विच्छिन्नपाशानामात्यंतिकम्मुक्तिसुखंचयोददाति सएवत्वमस्मान्विद्ययायोजयेतिभावः ॥ अलंकारः परिकरः साभिप्रायेविशेषणेइतिलक्षणात्परिकरालंकारः ॥ २५ ॥

अवतारः । यतएवंश्रीरुद्रएवभुभुक्षूणाम्मुमुक्षूणांचभुक्तिमुक्तिंचददातिदुःखार्तोऽहंत्वांविनाकंदेवंशरणंयामित्वमेवगतिरित्याह ॥

मू० ॥ यद्याकाशंशुभदमनुजाश्चर्मवद्वेष्टयेयुर्दुःखस्यान्तंतदपिपुरुषंत्वामविज्ञायनैति । विज्ञानंचत्वयिशिवऋतेत्वत्प्रसादान्नलभ्यंतद्दुःखार्त्तःकमिहशरणंयामिदेवंत्वदन्यम् ॥ २६ ॥

टी. यदीतिहेशुभदमनुजामनुप्रजापतेःसंभवामनुष्याइत्यर्थः। आकाशमदृश्यमविभक्तंसुषिरमात्रंव्योमचर्मवद्वेष्टयेयुःवेष्टनसाधनंवस्त्रंलोकसिद्धमपितस्यआतानवितानतंतुनिचयस्यांतरालस्यसत्वात्ततोपिघनी भूतचर्मवद्दृष्टिवातातपक्लेशपरिहारायवेष्टयेयुः । आच्छादयेयुर्यदितदपितथापिपुरुषंपुरीतन्नाडीषुशेतेइतिपुरिशः सएवपुरुषः॥पुरमेकादशद्वारमितिश्रुतेःसर्वासुपूर्षुशरीरेष्वात्मभावेनतिष्ठतीतिसर्वपरिपूर्णत्वाद्वापुरुषस्तंत्वांमहादेवमविज्ञाय अविदित्वादुःखस्यसंसारक्लेशस्यांतंस्वा

त्मरूपावाप्तिसुखन्नैतिनप्राप्नोति । तथाचश्रुतिः ॥ तमेवंविद्वा नमृतत्वमेतिनान्यः पन्था अयनायविद्यते॥ तरतिशोकमात्मवित्॥ यएतद्विदुरमृतास्तेभवन्त्यथेतरेदुःखमेवापियन्ति। यदाचर्मवदाकाशंवेष्टयिष्यंतिमानवाः । तदाशिवमविज्ञायदुःखस्यांतोभविष्यतीति ॥ तत्रकोमोहःकःशोकएकत्वमनुपश्यतइतिश्रुतिभिःदुःखस्यांतःअज्ञानपाश निवृत्तिरानन्दावाप्तिर्वामोक्षस्ततवयाथात्म्यविज्ञानंविनानैतिनप्राप्नोति । हेशिवत्वयित्वद्विषयेविज्ञानंसम्यक्ज्ञानंचत्वत्प्रसादादृतेनलभ्यंलब्धुंयोग्यंनभवेत्॥यतएवन्तस्माद्दुःखार्त्तो ऽहंत्वदन्यंकन्देवंशरणंगतिंयामिप्रपद्ये। वैधर्म्येणमिथ्याध्यवसितिरलंकारः ॥ २६ ॥

अवतारः। ननुविविधशास्त्रपाटवेनपारमेश्वरज्ञानंलभ्यतेतेनमुक्तिरितिचेन्न । सकलविद्याविलासोपिकालयापनमात्रफलकः। त्वत्प्रसादएकएवमुक्तिफलदइत्याह ॥

मू० ॥ किंगूढार्थैरकृतकवचोगुंभनैःकिंपुराणैस्तन्त्राद्यैर्वा पुरुषमतिभिर्दुर्न्निरूप्यैकमत्यैः ॥ किंवाशास्त्रैरफलकलहोल्लासमात्रप्रधानै र्विद्याविद्येश्वरकृताधियांकेवलंत्वत्प्रसादात् ॥ २७ ॥

टी॰ विद्येश्वरविद्यानामष्टादशविद्यास्थानानांचतुष्षष्टितंत्राणांचेष्टइतिविद्येश्वरः। गूढार्थैःगूह्यंतेस्मेतिगूढाःगुहु॥ संवरणेगूढाः संकुचिताअर्थायेषांतेगूढार्थास्तैः अकृतकवचोगुंभनैःनविद्यतेपुरुषांतरकृतकंवचनंयेषांतेषामकृतकवचसांगुंभनैरुपर्यु

परिवचनविन्यासैर्वाक्यसमूहैः किंफलमस्ति॥पुराणैः। सर्गश्च प्रतिसर्गश्चवंशमन्वंतराणिच। वंशानुचरितंचैवपुराणंपंचलक्ष णमित्युक्तविधपुराणार्थ प्रवचनपाण्डित्यैर्वाकिंफलंलभ्यते। पुरुषमतिभिः दुर्निरूप्यैकमत्यैःपुरुषधीवृत्तिभिर्दुर्निरूप्यंदुःखे नापिनिरूपयितुमशक्यं ऐकमत्यंएकधैवस्वसमयाचारेषुसांके ति कृतयामतीनांभावोयेषांतैः॥ तन्त्राद्यैःशैवकापालतन्त्रैःआ दिशब्देनरसक्रियाग्निस्तंभाभिचारादिभिर्वाकिंलभ्यते। न किमपीत्यर्थः। एवंसर्वशास्त्रस्यवैयर्थ्येसतिशिवज्ञानंकेनासि ध्येदित्यत्रोच्यते। कृतधियांवशीकृतमनसांशिवपदैकमनस्का नांकेवलंत्वत्प्रसादात्। षद्लृविशरणगत्यवसादनेषुप्रसादो नामअविद्याकामादिविशरणंपशोः पुण्यपापसाम्यगतिः। स र्वक्लेशावसादनंवाप्रसादस्वरूपमित्यर्थः। तादृशात्त्वत्प्रसादा त्केवलंविद्याशिवज्ञानं भवेदितिशेषः। तथाचश्रीब्रह्मवचनं परमाद्वैतविज्ञानंप्रसादादेवनान्यथा। यक्षराक्षसगन्धर्वसिद्धा दीनामपीश्वराः। परमाद्वैतविज्ञानंप्रसादादेवनान्यथा। प्र सादेसतिकीटोवापतंगोवाथवानरः। देवोवादानवोवापिल भतेज्ञानमुत्तमम्। एषएवहिजंतूनांसम्यक्ज्ञानन्ददातिच। नविष्णुर्नाहमन्यश्चसत्यमेवमयोदितमिति। ननुकथमिवेश्व रोवाप्रसीदतुदुष्टस्यास्यलोकस्यकर्मणोः फलभोगेनक्षयसाम्ये सतिहीश्वरःप्रसीदेत्॥ जंतोस्तत्समीकरणशक्तिर्नास्त्येव। स त्येवंकृतप्रयत्नस्याप्यस्यकिंभवेदितिचेच्छृणु। ईश्वरंप्रस्तुत्य श्रुतिः॥ एषउवावसाधुकर्मकारयतितं। यमेभ्योलोकेभ्यउ न्निनीषते। एषएवासाधुकर्मकारयतितं। यमधोनिनीषतइति श्रुतेः॥ सर्वज्ञेश्वरः कर्मक्षयसाम्यम्मरणसमयेऽनंतशरीरान्

प्रवेशात्कारयित्वादेवोरक्षत्येव । आरब्धंभोक्तव्यमेव । आरब्धस्योपजीव्यत्वात्तत्वज्ञानस्यकर्मणः ॥ अशक्यत्वाच्चमुक्तेषुरिवबाधोनविद्यतइतिस्मृतेः । अत्रसर्वसंशयनिवर्त्तकमुत्तरं श्रीवार्त्तिकाचार्यैरुदीर्यते । तमोमोहोमहामोहस्तामिस्रोह्यंधसंज्ञितः । अविद्यापंचपर्वैषाप्रादुर्भूतापरात्मनः । ब्रह्मदेवमनुष्येषुपशुषुस्थावरेषुच । पंचधाप्रविभक्तात्मावर्त्तते चिद्व्यपाश्रया । तामविद्यांतथाभूतांभगवान्परमेश्वरः । संहरत्युदयेनैवसहस्रांशुस्तमोयथा । ईदृशीपरमानिष्ठागुरोस्साक्षान्निरीक्षणात् । कर्म्मसाम्येत्वनायासात्सिद्ध्यत्येवनसंशयइतिप्रसादप्रकारएकः । अथश्रीकाश्यादिशिवस्थानानिप्रापयन् सुखेनमुक्तिंदास्यतीति । तर्हिजन्मकर्माधिकारसाधनादिविचारोनास्त्येव । कृतप्रयत्नापेक्षइतिब्रह्मसूत्रात्प्रथममीश्वरउपास्यः। सतुकेनाप्युपायेनरक्षिष्यत्येवेतिभावः । आहत्यत्वत्प्रसादादेवब्रह्मविद्योदेतितदन्यैस्सकलप्रयत्नै विफलमितिकथनाद्वैधर्म्येणविनोक्त्यलंकारः । विनोक्तिश्चेद्विनाकिंचित्प्रस्तुतंहीनमुच्यतइतिलक्षणात् ॥ २७ ॥

अवतारः देवत्वंअत्यंतहीनमपिदासम्मांप्रहातुन्नयुक्तमित्याह ॥

मू० ॥ पापिष्ठोऽहंविषयचपलस्संततद्रोहशाली कार्पण्यैकास्थिरनिवसतिंपुण्यगंधानभिज्ञः । यद्यप्येवंतदपिशरणंत्वत्पदाब्जं प्रपन्नंनैनन्दीनंस्म

रहरतवोपेक्षितुन्नाथयुक्तम् ॥ २८ ॥

टी. स्मरहरकामिनःकामिनीस्मारयतीतिस्मरः तंहर तीतिस्मरहरः । अहंपापिष्ठःपापकर्मण्येवस्थितःष्ठागतिनिवृ त्तौ । विषयचपलःविषयेषुस्रक् चन्दनवनितादींद्रियार्थेषुम शकमक्षिकायवाग्वादाविवचपलधीः । सन्ततद्रोहशालि सदाशिवगुरुवेदात्मनांद्रोहस्वभावः॥कथंसोब्रवीदहमेकःप्रथम मासंवर्त्तामिचभविष्यामिनान्यः कश्चनमत्तोव्यतिरिक्तइति शिवशासनोल्लंघनरूपःकश्चित् । देहेंद्रियादयोभावाहानादि व्यापृतिक्षमाः । यस्यसन्निधिमात्रेण सोहमित्यवधारयेति श्रीभगवत्पादाचार्यवचनोल्लंधनद्रोहोद्वितीयः । शिवलिंगंत्रि सन्ध्यमहरहरभ्यर्च्चयेत् । नानृतंवदेदित्यादिवेदवचनोल्लघना त्मकस्तृतीयः । अन्यथासंतमात्मानं योऽन्यथाप्रतिपद्यते । किंतेननकृतंपापंचोरणात्मापहारिणेतिश्रुत्यादेहात्मबुध्यात्मद्रो हश्चमयाभ्यस्तः । एवंसदासर्वद्रोहमेवकरोमीतिसंततद्रोहशा ली । कार्पण्यैकस्थिरानिवसतिश्च । कुटुंबपीडनेनापिजीवना यकथंचित् कल्पतेइतिकृपणः । कृपूसामर्थ्ये । अतियत्नेनजी वतीत्यर्थः कृपणस्यभावः कार्पण्यंतस्यएकामुख्यास्थिरानिव सतिःनिवासभूमिरस्मि । किंचपुण्यगंधानभिज्ञः पुणतिशिवं करोतीतिपुण्यं॥पुणशुभकर्मणि । तस्यपुण्यस्यगंधंलेशमपिनजा नातीतिपुण्यगंधानभिज्ञः । एवंयद्यपिउक्तदोषेषुसत्स्वपिना थतदपितथापित्वत्पादाब्जमेवगातिरिति प्रपन्नंदीनंमांप्रातितवो पेक्षितमुदासीनंकर्त्तुंनयुक्तम् । नाथदासस्यममदुष्कृतमखिलं वृद्धकुमारन्यायेनविस्मृत्यप्रशास्यवानाथेनत्वयाक्षन्तव्यमेव ॥ २८ ॥

अवतारः। नाथत्वन्निरस्तोहन्नकेनापिरक्षणीयोभवेयम्। तस्मान्मद्रक्षणौदासिन्यंमाकुर्वित्याह ॥

मू०। आलोच्यैवम्मयियदिभवान्नाथदोषाननन्तानस्मत्पादाश्रयणपदवीन्नार्हतीतिक्षिपेन्माम्। अद्यैवेमंशरणविरहाद्विद्धिभीत्यैवनष्टं, ग्रामोगृह्णात्यहिततनयंकिन्नुमात्रानिरस्तम् ॥ २९ ॥

टी. नाथमय्यनन्तानसंख्यातान्दोषान् सायन्निश्चयन्व्ययन्दोषास्त्रीवानादूषणाघयोरितिनानार्थरत्ननिघण्टुः। मयिदोषान् पापान्यालोच्यशतधापरीक्ष्याभवानस्मत्पादाश्रयणपदवींअस्माकंपादयोरव्यभिचारिण्याधियाप्रपदनस्य शरणवरणस्यमार्गमयन्नार्हतीतिक्षिपेद्य दित्यजसिचेत्तदाशरणविरहात्संरक्षकाभावाद्दिमम्मांभीत्या विनष्टंविनाशंगतमेवविद्धिजानीहि। कथमेतत्। लोकेकश्चिज्जीवनार्थंकृषिंवाणिज्यंअन्यांजीविकांवाऽतियंकंचिदाश्रित्यजीवेत्। तथात्वमन्यंदेवंकेनाप्युपायेनावलंब्यमुक्तोभवेतिचेन्न। अन्योपसर्पणायोग्यत्वात्। यतोप्यहिततनयम्मातुः पितुर्गुरोर्वाअहितकारिणंप्रतिकूलकारिणंअतश्चमात्रादिभिर्न्निरस्तंधिक्कृत्यबहिष्कृतंकंचनखलं ग्रामोग्रामीणोनगरंनागरिकोवाजनः भृत्यशिष्यपुत्रादित्वेनाविश्वस्यगृण्हातिकिन्नुनगृण्हात्येव॥ तर्हिशरणविरहाद्भीत्यानष्टमेवविद्धि। ततश्चमात्रादिस्थानीयेनत्वयापरित्यक्तस्यगत्यन्तराभावाद्दययामांरक्षेतिभावः। ननु। यथामातृमानापितृमानाचा

र्यवान् ब्रूयादितिश्रुतेः ॥ एतेत्रयोपिहितकृत्वेनश्रूयंते । कथंकविनामात्रानिरस्तमित्युक्तमित्यत्रोच्यते । पुत्रस्येदेहरक्षणबुद्धिपरिपालनविद्यादानायमातृ पित्राचार्यास्त्रयोप्युपकुर्वत्येव । तथाचश्रुतयः । प्राणस्येदंवशेसर्वंत्रिदिवेयत्प्रतिष्ठितम् ॥ मातेवपुत्रान्रक्षस्वेतिप्रश्ने । पितेवपुत्रमभिरक्षतादिमामित्यायुस्सूक्तेच ॥ त्वंहिनःपितायोऽस्माकमविद्यायाःपरंपारंतारयसीतिएवंत्रयोप्येतेसमय भेदेनरक्षका अपिजनकआचर्यश्चकदापिमनाक्स्ववचनोल्लंघनेसातिसद्यः परित्यक्ष्यतएवनपुनःस्वीकरिष्यतः॥मातातुशतापराधिनमप्यात्मजंकदापिनत्यजतिपुनःपुनर्हितमेवोपदेक्ष्यतीतिलोकरीतिमनुसृत्योक्तम्मात्रानिरस्तमितिभावः ॥ इहभीत्यानष्टमित्यत्रग्रामोग्रण्हातिकिन्वितिसमर्थनादर्थान्तरन्यासः ॥ २९ ॥

अवतारः । ईशयथाकथंचिद्धितोपदेशेनवामद्रक्षणमेवतवयुक्तन्नान्यदित्याह ॥

मू० ॥ क्षन्तव्यंवा निखिलमपिमे भूतभाविव्यलीकंदुर्व्यापारप्रवणमथवा शिक्षणीयंमनोमे । नत्वेवात्यानिरतिशयया त्वत्पदाब्जंप्रपन्नं त्वद्विन्यस्ताखिलभरममुंयुक्तमीशप्रहातुम् ॥ ३० ॥

टी. परमेश्वरदासस्यमेभूतभाविव्यलीकंभूतमज्ञदशाप्रसक्तंभाविशास्त्रज्ञानात्पश्चात्संभविष्यत् । तदन्तरासंभूतंनिखिलमपिव्यलीकम् । पीडार्थेतुव्यलीकंस्यादलीकन्त्वप्रियेऽ

नृतेइति । नि । सत्यंब्रूयात्प्रियंब्रूयान्नब्रूयात्सत्यमप्रियम् । प्रियंचनानृतंब्रूयादेषधर्मस्सनातनइतिस्मृतेः॥ प्रियवत्सत्यमेव ब्रूयात्कुर्याद्वा । ममभूतभाविव्यलीकमप्रियमनृतंचानुष्ठितमखिलंपरपीडनहेतुकंवचः कर्मवातत्श्रीमताक्षन्तव्यंवा । अथवादुर्व्यापारप्रवणं दुष्कर्मप्रसक्तम्मनोवाशिक्षणीयंत्वद्दर्शनासक्तंयथाभवेत्तथानुशासनीयम् । एतत्प्रकारद्वयंविनानिरतिशययानिर्गतोऽतिशयोह्युच्चत्तरोत्तरभावोयस्या स्सानिरतिशयातयाअत्यन्तार्त्या त्वत्पदाब्जंप्रपन्नंत्वद्विन्यस्ताखिलभरंत्वयिस्वामिनिसर्वसाक्षिणिप्रत्यक् चैतन्यस्वरूपेविन्यस्तोदर्शनश्रवणादिसर्वक्रियाकारयितृत्वेनसाक्षित्वेनावस्थितेविन्यस्तोऽखिलव्यापारविषयभारोयेनतम्मांप्रहातुन्नयुक्तमित्यर्थः । देहात्मबुध्याकृतंसर्वमपिव्यलीकमद्यविदित्वा सर्वांतर्यामिणस्तवकार्यमितिनिवृत्ताभिमानम्माञ्जह्याइत्यर्थः ॥ ३० ॥

मू०॥ सर्वज्ञस्त्वन्निरवधिकृपासागरःपूर्णशक्तिः कस्मादेनन्नगणयसिमामापदब्धौनिमग्नम्। एकंपापात्मकमपिरुजासर्वतोऽत्यन्तदीनं जन्तुंयदुद्धरसि शिवकस्तावतातिप्रसंगः॥३१॥

टी. शिव । त्वंसर्वंजानातीतिसर्वज्ञः । श्रु । यस्सर्वज्ञस्सर्वविद्यस्यज्ञानमयन्तपइतिसर्वज्ञोऽसि । निरवधिकृपासागरः निर्गतोऽवधिरवसानं यस्मात्सनिरवधिः । सगरसुतैर्निखातस्सागरः कृपैवसागरोनिरवधिकृपासागरः । यद्यपिबालहृ

ऽरपारत्वप्रतीतिसत्वे ऽपिप्रमाणदृष्ट्यापारदर्शनात्तद्व्याप्त्यर्थ मेवनिरवधित्वविशेषणंसंपूर्णदयावानित्यर्थः । देवस्यदया निधित्वेइदमुच्यते । पुरादक्ष श्शंभुमायामोहित श्शिवमदूषय त् । शिवदूषणश्रवणमप्यतिदुष्करामितिभागवते ॥ कर्णौपि धायनिरगाद्यदकल्पईशेयस्वावितर्यसृणिभिर्नृभिरस्यमाने ॥ छिंद्यात्प्रसह्यरुशतीमसतांप्रभुश्चे ज्जिव्हामसूनपिततोविसृजेत्स धर्मइति । शिवपुराणे । शिवनिन्दावचश्श्रुत्वायस्तुनव्याकुलो भवेत् । सचण्डालत्वमासाद्यनरकेषुपातिष्यति । कौर्मे । य स्सर्वभूतविनुतंविश्वेशंतुविनिंदति । नतस्यनिष्कृतिश्शक्याकर्त्तुं कल्पशतैरपीति॥पाद्मे॥शिवनिंदापरम्मूर्खंयदिशासितुमक्षमः। स्वकर्णौतोदयेत्तोत्रैरितिशास्त्रविनिश्चयइति । एवन्निंदाश्रवण स्यैवंप्रायश्चित्तेसतिसाक्षान्निंदकस्य दक्षस्यवीरेणच्छिन्नमपिशि रःपुनस्संसधायसमुज्जीव्यगाणपत्यन्ददावितिस्कान्दकथा। अ पिचश्रीरिटिमुनिकलत्रंवह्निदग्धमपिदययासमुज्जीव्यतस्यैश्री गिरिजासख्यमदिशदिति चएवमादीतिहासैर्देवस्यनिरवधिकृ पासागरत्वप्रसिद्धेस्सताद्दशएव । तथापूर्णशक्तिश्च।श्रु। परास्य शक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेति । किंच कालकूटविषहरणशमनमथनत्रिपुरहननादि विविधशक्तिवैचि त्र्यदर्शनाच्चपूर्णशक्तिश्चासि । अयंभावः कश्चित्प्रभुश्शास्त्र ज्ञानेनसर्वप्राणिनांसुखदुःखादिविजानन्नपिजन स्स्वकर्मफल मेवभुङ्क्तेइत्युदास्तेपूर्णदयाभावात् । पूर्णदयोपिकाश्चिद्भू पतिस्स्वस्यापिस्वामिनश्चक्रवार्त्तिन श्शासितान् जन्तून् विपन्ना नुद्धर्त्तुंनाहंशक्नुयामितिबिभ्यति । नतथेहभवितुमर्हति । यत स्त्वमेवसर्वज्ञोनिरवधिकृपासागरः पूर्णशक्तिश्चभवासि ॥ माम

कीं दुःखपरंपरां ज्ञात्वा कृपया सन्निधाय मामकं विधिलिखितन
विलसितं पक्षपातिदेवगणमपि परिमृज्य सर्वातिशायिन्या विविधया शक्त्या मय्यवश्यं रक्षणीये सति । आपदब्धौ निमग्नमेनं मां कस्मान्न गणयसि न जानासि । शिव ॥ पापात्मकं पापासक्तांतःकरणमपि सर्वतोरुजार्त्यं तदीनमेकं जन्तुं मां यदुद्धरसि । तवतावता कोतिप्रसंगो भवेत् । अतिप्रसंगो नाम वेदलोकव्यवहारशास्त्रमतिक्रम्य प्रकर्षेण कुत्रचित्सज्जत इति यत्सोतिप्रसंगः । पूर्वोक्तरीत्या न कदापि भावितुमर्हति॥ ततो नातिप्रसंगस्ते भवेत्मां रक्षेति भावः । अन्वयः । शिव त्वं सर्वज्ञो निरवधिकृपासागरः पूर्णशक्तिश्चासि । आपदब्धौ निमग्नं मां कस्मान्न गणयसि । पापात्मकमपि सर्वतोरुजार्त्यन्तदीनमेकं जन्तुमेनं समुद्धरसि यदि तव तावता कोतिप्रसंगो भवेत् । अत्र कथन्न गणयसि कोतिप्रसंग इत्याक्षेपोक्त्या परमेश्वरस्य सर्वज्ञत्वादिमहिमाभिव्यक्तेस्तु तिरेवाभिव्यज्यत इति व्याजस्तुत्यलंकारः ॥ ३१ ॥

अवतारः । नाथ मां रक्षेति जन्तूनामभ्यर्थनाच्छिवः प्रसन्नस्तमनुगृण्हतीत्ययं प्राचीनमार्गः केनवाक्षुण्णस्तदन्यः को वा मार्गोस्तीति पृच्छति ॥

मू० ॥ अत्यन्तार्तिव्यथितमगतिं देवमामुद्धरेति क्षुण्णो मार्गस्तव बत पुरा केन वा नाथ नाथ । कामालंबे बत तदधिकां प्रार्थनारीतिमन्यां त्रायस्वैनं सपदि कृपया वस्तुतत्वं विचिन्त्य ॥ ३२ ॥

टी. अनाथनाथअगतिकानामत्यन्तपापानामपिमहादेवे
सकृन्नामोच्चारणमात्रेणसनाथोभवेदित्यनाथनाथ तथाशिव
रहस्यम् । कोटयोब्रह्महत्यानामगम्यागमकोटयः॥ सद्यःप्रलय
मायांतिमहादेवेतिकीर्त्तनात् । महादेवेतिवक्तारंद्रष्टातुयमकिं
कराः । पलायंतेमहाभीतास्मरंतोयमशासनमित्यादिनास
कलसुरैरपिपापिष्ठत्वेनप्रायश्चित्तानर्हतयायः परित्यक्तोभवति
तस्यनाथोहमितिनामकीर्त्तनमात्रतः प्रायश्चित्तेनरक्षतीति महा
देवोऽनाथनाथइत्यर्थः। हेसर्वनाथअत्यंतार्त्तिव्याधितं अधिका
भिरार्त्तिभिः पीडाभिर्व्यथितेव्यथायुक्तमगतिंनाविद्यते कापि
गतिर्यस्यतंमांदेवमामुद्धरऊर्ध्वंतारयेतितवाभ्यर्थनमार्गः पुराके
नवाक्षुण्णोभ्यस्तःचूर्णितः॥ माघे॥ क्षुण्णंयदंतःकरणेनवृक्षाः
फलंतीति । मूकपंचशत्याम् । क्षुण्णंकेनचिदेवधीरमनसेतिच
प्रयोगदर्शनात् । प्राचीनमार्गः पुराकेनवाक्षुण्णः प्रहतइत्यर्थः
देवसतुक्षुण्णोभवेन्नाम । तदधिकामन्यामुक्तविपरीतांकांप्रार्थ
नारीतिंत्वदभ्यर्थनप्रकारमालंबेसमाश्रये नकोपिप्रकारोस्तीति
भावः । तस्मात्त्वंवस्तुतत्वंविचिन्त्यवस्तुनोस्तत्वंवस्तुतत्वंजी
वेश्वरयोर्बुद्धिगुहांप्रविष्टयोः सोदरवत्सहस्थितयोः भोक्तृभोज
यित्रोः पांसुकणकल्याणशैलवदधरोत्तरयोः किंचित्ज्ञसर्वज्ञ
योःसेव्यसेवकयोरावयोर्वस्तुनो स्त्वंममाकिंचिन्यंतवमहदै
श्वर्यवैभवंचविचिंत्यपर्यालो च्यसपदिकृपयाकेवलपेनम्मात्रा
यस्वेत्यर्थः। मद्भाग्यवशात्कदाचिदावयोर्वस्तुतत्वविचारोयदि
भवतितदैवमच्छोकनिवृत्तिर्भवेदितिभावः ॥ ३२ ॥

मू० ॥ एतावन्तंभ्रमणनिचयंप्रापितो

ऽयंवराकश्श्रान्तस्स्वामिन्नगति रधुना
मोचनीयस्त्वयाहमकृत्याकृत्यव्यपग
तमतिर्दीनशाखामृगोऽयंसंताड्यैनंद
शनविवृतिंपश्यतस्तेफलंकिम्॥३३॥

टी। हेस्वामिन्एतावन्तंभ्रमणनिचयं बहुयोनिशतनर
कगर्भमरणरूपभ्रमणसमूहमयंवराकोहीनजंतुः प्रापितः संयो
जितःअतोऽद्यश्रांतोऽगतिश्चखिन्नमनस्कोभूत्।इतस्मोचनीयः
पतिमन्तरेणपशुंकोवामोचयिष्यति। ततोऽद्यमानुष्येजन्मनि
शिवज्ञानदानेनमोचनीयः। किंचायंकृत्याकृत्यव्यपगतमतिः
कृत्यंविहितमकृत्यन्निषिद्धंताभ्यां व्यपगताविदूरंगतामतिर्य
स्यसताद्दशोदीनशाखामृगः बहुयोनिसहस्रवीथीषुयातायाते
नदीनभावंगतोऽयंपुच्छलशून्यमर्कटःमर्कटसमानोवास्मि। एवं
भूतमेनन्नरवानरंमांपदेपदेकालदण्डेनसंताड्यतस्यदशनविवृतिं
दैन्येनतत्कृतदंतप्रकटनंपश्यतस्तेकिंफलमस्ति॥ लोकेशैलूषादि
निहीनजनस्स्वजीविकार्थंजालेनमाद्दशं कीशंपाशेनबध्वाप्रति
ग्रामं प्रतिद्वारंसमाकृष्यतत्रतत्राभिनयंकारयित्वातांतांभिक्षा
मादायोपजीवेत्। तस्याहितज्जंतुहिंसास्वाभाविकी,समयो
जनाचभवेत्। श्रु। शंभुमस्तुत्याह। भोगार्थंसृष्टिरित्यंन्येक्री
डार्थमितिचापरे। देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहे
तिश्रुत्वाभोगादि सकलनिस्पृहस्यतवमद्दुःखकरणेनकिंवाफ
लमस्तीतिभावः। तस्मात्किमेभिः पल्लवितैर्वचनैर्मर्कटस्वभा
वोप्ययंरक्षणीयइतिभावः। अत्रविशेषणबलात्स्वस्मिन्दीन

ाखामृगतामारोप्यदशनविद्धत्यादि धर्मेणानुरंजनाद्रूपकालं
ारः। विषय्यभेदताद्रूप्यरंजनंविषयस्ययत्। रूपकंतदिति
लक्षणाद्रूपकालंकारः॥ ३३॥

मू०॥मातातातस्सुतइतिसमाबध्यमाम्मो
हपाशैरापात्यैवंभवजलनिधौहाकिमी
शत्वयाप्तम्॥ एतावन्तंसमयमियती,
मार्त्तिमापादितेस्मिन् कल्याणीतेकि
मितिनकृपाकापिमेभाग्यरेखा॥ ३४॥

टी। ईशमातातातःसुतइतिमांतिपरिमिनोतिगर्भे इति
मातामामाने॥ तनोतिकुलमितितातः।तनुबिस्तारेसौत्येनम्मा
तेतिसुतःषुप्रसवैश्वर्ययोरितिजायामातुलादयोगृह्यन्ते। मात्रा
दिबन्धुवर्गेषुस्नेहवशाद्योमोहएवपाशस्तेनमोहपा शेनमामाबध्य
भवजलनिधौसंसारसमुद्रेआपात्य सम्यक्पातयित्वात्वयाकिं
फलमवाप्तम्। हाविषादे॥तिरोन्तधौतिर्यगर्थेहाविषादशुगार्त्ते
ष्विति।नि। सार्वभौममृयागदूयतादिवत्फलाभावेपिलीलामा
त्रतयामय्येवंक्रियतान्नाम। एतावन्तंसमयमद्यतनपर्यन्तंइयती
मेतादृशीमार्तिपीडामापादितेसंपादितेप्यस्मिन्नरे । कल्याणी
कल्यंसुखमणतिप्रापयतीतिकल्याणीनित्यशोभनाते कृपाकि
मितिन। अथापिमेकाप्यनिर्वचनीयाभाग्यरेखाभव्यशंसिनी
फाललिपिरपिकिमितिनास्ति। पुण्यैर्देवत्वमाप्नोतिपापैस्था
वरतामियात्। समाभ्यांपुण्यपापाभ्यांमानुष्यंप्राप्नुयान्नरइ
तिपुराणवचनात्। मानुष्येजन्मन्यस्मिन्पापाधिक्येपिकचित्को

णैपुण्यलेशोपिनास्तिकिम् । अस्तिचेदपित्वत्कृपानायातिविषमितिभावः । अन्वयःईशमातातातःसुतइतिमाम्मोहपाशेन बध्वाभवजलनिधौसमापात्यत्वयाकिमवाप्तम् । हाकष्टंएतावन्तं समयमियतींमार्तिमापादितेऽस्मिन्कल्याणीते कृपाकिमिति नभवतिअथवाकापिमेभाग्यरेखावाकिमितिनास्ति ॥ ३४ ॥

अवतारः । एवमतिदुःखेनविलप्यपुनश्चक्षुरुन्मील्यव्यवहारदशाप्यहन्त्वयारक्षणीयएव नोचेल्लोकापवादापहासयोरास्पदंभवसीत्याह ॥

मू० ॥ भुंक्षेगुप्तंबतसुखनिधिंतातसाधारणंत्वंभिक्षावृत्तिंपरमभिनयन्मायया मांविभज्य ॥ मर्यादायास्सकलजगतान्नायकस्थापकस्त्वंयुक्तं किंतद्दद विभजनंयोजयस्वात्मनामाम् ॥ ३५ ॥

टी. हेतातजनकत्वमावयोरुभयोः साधारणंसमानमाधारणम्मानमस्येतिसाधारणंसमुदायमित्यर्थः । गुप्तंकुत्रापिनिगूढदेशस्थापितंसुखनिधिंसुखानि वैषयिकानिशब्दस्पर्शादिसंसर्गसमुद्भवानिश्रुत्युक्तसार्वभौमादि ब्राह्मपदांतसुखानिअन्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः। सर्वाणिसुखान्यस्मिन्निधीयंतइतिसुखनिधिस्तंआवयोर्भोगार्हंस्वयमेवभुंक्षे । सुखनिधिमनुभवसिकिंकुर्वन् भिक्षावृत्तिंभिक्षान्नमेववृत्तिर्जीवनन्तांपरं नितरामभिनयन् नहितेभिक्षैववृत्तिर्जीवनं ॥ श्रु ॥ यस्यब्रह्म

क्षत्रंचोभेभवतओदनः ॥मृत्युर्यस्योपसेचनंकइत्थावेदयत्रसइ
ते । यस्सर्वान्लोकान्संभक्षस्संभक्षत्यजस्रंसृजातिविसृजाति
वासयतितस्मादुच्यते महेश्वरइतितस्मैरुद्रायमहाग्रासायमहेश्व
रायनमइतिश्रुतिभिः ॥ अत्ताचराचरग्रहणादितिब्रह्मसूत्रा
च्चाअपिचमहेशस्यतवभिक्षाप्रदानशक्तिर्नकस्याप्यस्ति । तद
पिदेवासुरकुलगर्वभंगायदारुकावनमुनिजनज्ञानदानायचकृतं
भिक्षाटनद्वयमापिजीवनार्थमितिनप्रतीयते । किंतुजगद्धितायै
वेतिपुराणैरवगम्यते । ननुकदाचित्ब्रह्मशिरच्छेदाघनिर्हर
णायविधिविहितद्वादशवार्षिककपालभिक्षामटाटीदिति किंव
दन्त्याहकिमुत्तरमितिचेदुच्यते । पुराकल्पादौपरमेश्वरस्यवी
र्येशक्त्यंशेनहरिणागृहीतं कालेनपंचमुखहैरण्यगर्भरूपेणपरिण
तंसत्हरेर्नाभिरन्ध्रान्निर्गतंतुस्यविधेः । पश्चाज्जातुश्रीकैलास
यात्रायांश्रीगौरीहराकारंविधिर्विलोक्यतवैकंशिरः पतत्वित्य
शपत्तदनुहरिविधिविवादसमयानृतभाषणत स्त्वमपूज्योभवेति
हरेणशप्तश्चसन् क्रोधेनभगवन्तंप्रत्यमङ्गलवचांसिविलपन्तंभै
रवस्तत्प्रधानमूर्ध्वशिरः करनखरेणोच्छिद्यवैकुण्ठेरक्तभिक्षाम
चरत् । तदाकपालस्यापूर्णतयापुनःकृष्णावतारेभारतयुद्धेभि
क्षापात्रंपूरयामासेतिकथावलोकनीया । तर्हिकस्यवान्यस्यभि
क्षाप्रदानशक्तिरस्तीतिभावः । अपिचहरस्यभिक्षाटनंब्रह्मह
त्याघनिवृत्त्यर्थमित्येतदुपहासास्पदन्नकिम् । विष्णुपुराणे ।
संहृत्यसर्वभूतानिदेवादीन्यविशेषतः । नृत्यत्यंतेचयद्रूपन्त
स्मैरुद्रात्मनेनमइति । अविशेषेणब्रह्मविष्ण्वादिचेतनशरीरं
सर्वंनिटिलनयनाग्निस्फुलिंगेनकल्पांतेक्षणाद्दग्ध्वा नृत्यतोरु
द्रस्यकस्यचित्ब्रह्मणएकशिरोलवनंकियदितिभावः । दा

रूकावनेनिजशक्त्यंशेनविष्णुनासहान्नभिक्षामेवाग्रहीत् ।
त्रोभयत्राप्यशनन्नप्रतीयते । अतएवोक्तंभिक्षामभिनयन्निति
"अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः । प्रप्रदातारंतारिषऊर्ज
न्नोधेहिद्विपदेचतुष्पदइतिश्रुत्यासर्वे स्यान्नदातुःकोवान्नदोभवे
दितिभावः । तस्मादभिनयमात्रंभिक्षाटनमित्यर्थः । किंकृत्वै
वमित्यत्राह । माययावंचनयाकौटिल्येनमांविभज्यवित्तक्षेत्रम
णिभूषणादिसर्वंवस्त्वेकस्यतवभागः । उत्तमर्णैर्निर्भत्स्यमान
दुस्सहमृणमेकस्यममभागइतिद्वेधाकृत्वामां विभज्ययद्वामायाप
रपर्याययाअविद्ययासहस्वतंत्रमायोपाधिकईश्वरः । अवि
द्यापरतंत्रोजीवइतिव्यवस्थितेः । अविद्ययाअज्ञानेनसहमां
विभज्यस्वयंवशीकृतमायस्सन्सर्वज्ञत्वाद्यैश्वर्ययुतः । मामवि
द्यावशगंकृत्वेत्यर्थः । स्वयंपूर्णसुखमेवभुंक्षे ॥ बतखेदे ॥ स्वजनत
स्करेणसहैवास्थित्वा सर्वस्वाक्रमणेकस्यखेदोनभवेदितिभावः ।
भवत्वेवमज्ञदशाकृतविभागः । न्यायशास्त्राणिप्रभवश्चसंतिशत
शइतिचेन्न,सर्वमपिशास्त्रन्त्वदधीनमेवेतिदृश्यते । श्रु । यथार्द्रै
धाग्नेरभ्याहितस्यपृथक्धूमाविनिश्चरंति एवंवाअरेअस्यमहतोभू
तस्यनिश्वसितमेतदृग्वेदोयजुर्वेदस्सामवेदोथर्वांगिरसइतिहासपु
राणमितिश्रुत्याशास्त्रयोनित्वादितिब्रह्मसूत्राच्च । यस्यनिश्व
सितंवेदायोवेदेभ्योऽखिलंजगत् । निर्ममेतमहंवंदेविद्यातीर्थम्म
हेश्वरमितिवेदभाष्यकारसूक्तेश्चसर्वस्यशास्त्रस्य त्वत्प्रभवत्वेस
तितच्छास्त्रंत्वत्पक्षपाति । उतानिष्पक्षपातिवानजानेबतबतअ
थप्रभवोबहव स्संतितेभ्योदुःखंविज्ञापयामीतिचेत्तेपिसंभूय
त्वामेवमहाप्रभुंडिंडिमघोषेणघुष्यंति । तमीश्वराणांपरम्महे
श्वरंतंदैवतानांपरमंचदैवतमिति ॥ भारतेआनुशासनिके ॥ यस्यत्र

ह्माचविष्णुश्चत्वंचशक्रसहामरैः॥ अर्चयध्वेसदालिंगंतस्माच्छ्रे
ष्ठतरोहिकइतितत्रैवमुकुंदः॥ अहमात्माहिलोकानांसर्वेषांपाण्डु
नन्दन। तस्मादात्मानमेवाग्रेरुद्रंसंपूजयाम्यहं ॥ यद्यहन्नार्च
येयंवैईशानंभुवनेश्वरम् । आत्मानंनार्चयेत्कश्चिदितिमेभावि
तम्मनइति। कौर्मे। कर्ताहंसर्वलोकस्यममकर्तामहेश्वरः॥तस्य
देवाधिदेवस्यकर्ताकोपिनविद्यतइति सर्वशास्त्रन्त्वत्पक्षएवेति
प्रतिभाति॥त्वत्तोधिकःप्रभुरपिनास्ति॥बतबत॥एवम्मनसिनि
धायपुनःपृच्छतितातसकलजगतांषड्भावाविकारान् गच्छन्ती
तिजगन्तिसकलानिजगन्तिसकलजगन्ति तेषांभुवनानांत्वमेक
एवनायकःप्रभुरसि। अपिचमर्यादायाः। मुर्येतिसीमार्थेअव्य
यम् । तत्रदीयतइतिमर्यादा । यस्यकस्यचिद्यावद्धनमधि
कारोवयोवास्वाचारादीनिचतान्यनतिक्रम्यतैस्तैर्व र्तितव्यमि
तिअतिक्रमेशिक्षाभवेदितिश्रुत्यादिशास्त्रंसर्वन्त्वयैवयतः पुरा
स्थापितन्ततोमर्यादायास्थापकश्चासि । इदंविरुद्धं ।श्रु।
एषसेतुर्विधरणएषांलोकानामसंभेदायेति श्रुत्यासर्वजनवि
दितमेव। सत्येवंसकलजगतान्नायकस्यसकलशास्त्रनिदानस्य
भक्तकुलपालकस्यसर्वज्ञत्वादिसकलकल्याणगुणशीलस्य सां
बस्यससुतविलासस्यसन्ततसमाधिपरब्रह्मनिष्ठगरिष्ठसनकादि
महामुनिसंघसंवीतस्यवेदान्तवेद्यस्यदयानिधेर्भगवतस्त वमहा
दीर्घसुखमेकस्य। नित्यदुःखमेकस्यममेतिवैषम्येणकृतमिदंवि
भजनंयुक्तंकिंत्वंवावद । पूर्वोक्तहेतुभिर्युक्तमेवेतित्वयापिवक्तु
मशक्यमित्यर्थः। यतःत्वद्वाचकंप्रणवाख्यंब्रह्मवैदिकैरेवमभ्य
र्थ्यते। श्रु। मधुवाताऋतायतेमधुक्षरन्तिसिन्धवः। माध्वी
र्नस्सन्त्वोषधीःमधुनक्तमुतोषासि मधुमत्पार्थिवंरजःमधुद्यौ

रस्तुनः पिता । मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः । माध्वी र्गावोभवन्तुनइति ॥ जिह्वामेमधुमत्तमेतिप्रार्थ्यसे । मधुवत्सर्वंप्रियमेवास्त्विति वाक्यार्थः तादृशस्त्वमयमन्यायविभागोपिन्याय एवेतिकथंत्ववक्ष्यसीतिभावः । किंचआवयोश्चिरानुभवसिद्धंतत्त्वमद्यान्यथयितुमशक्यमितिचेन्न । तातसुतयोर्व्यवहारस्यनित्यत्वादज्ञदशाकृतविभागस्यचासिद्धेः । तस्मात्तच्छास्त्रलोकसिद्धोयंदोषः परिहरणीयएवतत्रकउपायइतिचेद्विज्ञप्तिंश्रृणु । गतन्तुगतमेवतात्तिष्ठतु । इदानींस्वात्मनासहैवमांयोजयएकीभावंकारय ॥ हेताततत्त्वंशब्दार्थभूतयोःशिवजीवयोरावयोरैक्येतुतवनकापिहानिर्भवेत् । तवशास्त्रलोकापवादनिवृत्तिफलंचभवति । ममतुपारमार्थिकस्वरूपावाप्त्याकृतकृत्यताचभवति । अहोतादृग्भाग्यमवाप्स्येकिन्नु ॥ उक्तंहिशाण्डिल्योपनिषदि ॥ आत्मानमंजसावेत्मिक्वाप्यज्ञानंपलायितम् । कर्त्तृत्वमद्यमेनष्टंकर्त्तव्यंवानमेक्वचित् । ब्राह्मण्यंकुलगोत्रेचनामसौन्दर्यजातयः । स्थूलदेहगताएतेस्थूलाद्भिन्नस्यमेनहि । क्षुत्पिपासांध्यबाधिर्यकामक्रोधादयोगुणाः । लिंगदेहगताएतेलिंगात् भिन्नस्यमेनहि । येनसम्यक्परिज्ञायहेयोपादेयमुज्झता । चित्तस्यांतेर्पितंचित्तंजीवितंतस्यशोभते ॥ इतिसर्वसंसारदुःखविनाशेननित्यतृप्तस्त्वमेवाहमिति घटाकाशमहाकाशवदेकीभवेयंनान्यत्किंचिदपियाचेइतिभावः । अन्वयः । तातत्वंमाययामांविभज्यभिक्षावृत्तिपरम भिनयन्साधारणंगुप्तंसुखनिधिंभुंक्षे । त्वंसकलजगतान्नायकः मर्यादायास्थापकश्चासि । तस्यतेमद्विभजनमिदंयुक्तंकिंवद । आत्मनासहैवमांयोजय । पुनस्स्वगुणसंप्राप्तिःपूर्वरूपसदाहृ तमितिलक्षणात्पूर्वरूपाप्त्य

लंकारः। सुखस्यनिधित्वेनरूपणाद्रूपकालंकारः । स्वात्मना योजयेतिलोकप्रवादानुकरणाल्लोकोक्त्यलंकारः । प्रस्तुतव्यवहारस्यतातेतिसाभिप्रायविशेष्यात् परिकरांकुरालंकारः ॥ आपाततःप्रतीयमाननिन्दयास्तुतिपर्यवसायाव्याजस्तुत्यलंकारः । एतेषांसंसृष्टिश्च ॥ ३५ ॥

अवतारः । रेदासमयासहैवंव्यवहरतस्तेनेदानीम्मुक्तिदानमभिप्रेयते परन्तुकालान्तरेपश्यामीतिचेदस्तुनामतावकजनसंसर्गयोग्यदेशेषुशतंसहस्रंवाजन्मास्त्विवतिविज्ञापयति ॥

मू० ॥ नत्वाजन्मप्रचयजलधेरुद्धरामीतिचेद्धीरास्तान्तन्मे भवतुचजनिर्यत्रकुत्रापिजातौ। त्वद्भक्तानामनितरसुखैः पादधूलीकिशोरैरारब्धम्मेभवतुभगवन्भाविसर्वंशरीरम् ॥३६॥

टी । हेभगवन्त्वात्वांजन्मप्रचयजलधेः विविधजन्मनांप्रचयःसमूहःसएवजलधिरिवजलधिः तस्मात्संसारसमुद्रान्नेदानीमुद्धरामि । उद्धर्तुंनेच्छामीतिधीस्तवबुद्धिरस्तिचेत्तदास्तांशिवसंकल्पंविनातृणमपिनचलेदेव । तस्मान्मेजनिरुत्पत्तिर्यत्रकुत्रापिजातौभवतुच । भवदिच्छानुसारेणभाविपश्चान्मयाप्राप्तव्यंसर्वंशरीरं॥ अस्तिजायतेवर्धतेपरिणमतेअपक्षीयतेविनश्यसीतिविकारषट्कयुतं शीर्यत्स्वभावंसर्वंशरीरमित्यर्थः । त्वद्भक्तानांश्रीगौतमागस्त्यभृगुदधीचोपमन्युमहर्षिमुखानांश्रीनन्दिभृंग्यादीनांवा। अनितरसुखैः वैषयिकसुखानि

दुःखशिरस्कानीतराणि सुखानिनविद्यन्ते इतरसुखानियेषं तैः त्वद्भक्तपादधूलिकिशोरैः भक्तचरणतलसंसक्तधूलयः पांसवः तेषांकिशोरैरर्भकैः परमाणुकणैरित्यर्थः। मेसर्वंशरीरमारब्धंभवतु। आलिप्तमितिपाठांतरम्। यद्यपिशरीरारंभणसाधनंसर्वमपि। प्राक्शरीरोत्क्रांतिसमयएवसारांशतया गृहीत्वायातीति। श्रु। तद्यथापेशस्कारीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरंरूपंतनुते। एवमेवायमात्मेदंशरीरन्निहत्याविद्यांगमयित्वान्यन्नवतरंकल्याणतरंरूपंकुरुते। पित्र्यंवागान्धर्ववाप्राजापत्यंवान्येषांवाभूतानामिति। तदन्तरप्रतिपत्तौरंहतिसंपरिष्वक्तः प्रश्ननिरूपणाभ्यामितिब्रह्मसूत्राच्चशरीरांतरारंभसाधनमात्मसमवाय्येव। तथापिस्थूलस्यपितृमातृभुक्तान्नपानादिप्रसक्तांशिवभक्तपादरजसाआरब्धंवार्धितंचेदापितन्मुक्तिसुखप्रायमेवेतिभावः। आलिप्तमितिपाठेतु बाल्येपांसुक्रीडासमयेमहाब्राह्मणपादधूलि संसक्तंशरीरंभवेदित्येतत्समंजसमेवसेत्स्यति। सतुब्राह्मणपांसुर्महिमाश्रूयतेहि। समस्तजगतसमवाप्तिहेतवस्समुत्थितापत्कुलधूमकेतवः। अपारसंसारसमुद्रसेतवःपुनन्तुमांब्राह्मणपादपांसवइति॥ तस्माच्छिवज्ञानिसत्रिविधेजन्मानिभवन्त्वितिभावः। अत्रयत्रकुत्रापीत्यविशेषेणजन्मांगीकारादोषेपि शिवभक्तिहेतुत्वेनतत्रैवगुणदर्शनादनुज्ञालंकारः। दोषस्याभ्यर्थनानुज्ञातत्रैवगुणदर्शनादितिलक्षणात्॥ ३६॥

ननुकुत्रकीदृक्जन्मवापेक्षसेइत्यतआह॥

मू०॥ कीटानागास्तरवइतिवाकिन्नस

न्तिरुस्थलेषुत्वत्पादांभोरुहपरिमलो
द्वाहिमन्दानिलेषु । तेष्वेकंवासृजपु
नरिमन्नाथदीनार्त्तिहारिन्नांतोषन्तेमृ
डभवमहांगारनद्यांलुठन्तम ॥३७॥

टी. नाथत्वत्पादांभोरुहपरिमलोद्वाहिमन्दानिलेषुतव पादावेवांभोरुहेतामरसेतयोः परिमलंसौगन्ध्यं उद्वहतीतित्व त्पादांभोरुहपरिमलोद्वाही । सचमन्दानिलोमन्दमारुतोयेषा न्तेषु स्थलेषुभूमिषुकीटाभूविवरमग्नाः सूक्ष्मजन्तवः नागाः न गच्छंतीतिनगागिरयः।तेभ्यःसमुत्पन्नानागाभुजगविशेषाः॥ तरवस्तरन्त्यातपक्लेशमेभिरितितरवः । तॄ+ प्लवनतरणयोः॥ एवंकीटानागायूकामशकादंशास्तरवोजन्तवः किंवाकतिवाः संति । सर्वतः संत्येवेत्यर्थः । तेषुपुरोदितस्थलेषुतेषुजंतुषुहेमृ डदीनार्त्तिहारिन् भवमहांगारनद्यांसंसाराग्निज्वालोल्बणायां वैतरिण्यांहाहेतिलुठन्तमेनम्मांतेतवातोषंत्वत्संतुष्टिपर्यंतं यथा कथंचित्तवसंतुष्टिरेवहिकार्या । परमेश्वरप्रीत्यर्थमितिसंकल्प स्सार्थोभवेत्तस्माद्यत्रकुत्रापि त्वद्भक्तचरणसन्निधानवासिषु तरुगुल्मादिषुजंतुषुतृप्तिपर्यंतंसृज । जन्ममास्त्वित्युक्तंकोवा जहातीतिभावः ॥ अन्वयः । त्वत्पादांभोरुहपरिमलोद्वाहि मंदानिलेषुस्थलेषुकीटानागास्तरवइतिकिन्नसंति । हेमृडदीना र्तिहारिन् भवमहांगारनद्यांलुठंतमेनंतेष्वेकंवातवाऽतोषंपुनःपु नःसृजेत्यर्थः ॥ ३७ ॥

प्रस्तुतस्यारब्धस्वदेहस्यावसानंसिद्धवत्कृत्यतत्कालभ
हरमंतकांतकमेवमभ्यर्थयति ॥

मु०॥ कालेकण्ठस्फुरदसुकलालेशसत्ता वलोकव्यग्रोदग्रव्यसनिसकलस्निग्ध रुद्धोपकण्ठे । अन्तस्तोदैरवधिरहितैरार्त्तिमापाद्यमानेप्यंघ्रिद्वंद्वे तवनिविशतामन्तरात्मन्ममात्मा ॥ ३८ ॥

टी. हेअन्तरात्मन् कूटस्थचैतन्यस्वरूपकण्ठस्फुरदसुकलालेशसत्तावलोकव्यग्रोदग्रव्यसनिसकलस्निग्धरुद्धोपकण्ठे । कणतीतिकण्ठःकणशब्दे॥ कण्ठेस्फुरत्असुःप्राणवायुः । तस्य कलासूक्ष्मचलनरूपातस्यालेशस्त्वतिसूक्ष्मचलनं तस्यसत्तायाः सद्भावस्यावलोकेव्यग्राजागरूकाअतएव उदग्रमधिकंव्यसनं येषांतेउदग्रव्यसनिनः सकलाश्चतेस्निग्धाः सकलस्निग्धास्तैर्निरुद्धउपकण्ठः कण्ठसमीपंगतोयस्मिन् तस्मिन्नवधिरहितैर्निरवधिकैः अंतस्तोदैःतुदाहिंसायां ऊर्ध्वश्वासकण्ठतालुजिह्वाशोषणहिक्काश्लेष्मरोधांगव्यथा ॥ जायासुतादिधनप्रश्नव्यथा सर्पव्याघ्रवृश्चिककूपांगारावटपतनस्वप्नमूर्च्छामृत्युभटदर्शनमित्येवमादिभिरवधिरहितैश्चांतस्तोदैरार्त्तिपीडाप्रापाद्यमाने संपाद्यमानेपिकालेचरमश्वाससमयेममात्माअंतः करणंतवांघ्रिद्वंद्वेनिविशतांप्रविशेत् ॥ प्रविश्यचजीवात्मपरमात्मानोरेकीभावरूपांपरांमुक्तिंप्राप्स्येइत्यर्थः। ननुजीवब्रह्मणोरैक्यंकथंभूतम् । जीवस्यब्राह्मिरूपंपुनरेकीभूतस्यजीवात्मनोनपुनरावृत्तिर्भवेत् । तदैक्यं

ऽमितिचेदुच्यते। अत्रवादिनोबहुधाविवदंतेतद्यथा॥क्षीरनीर
योःसंसर्गेणैकीभाववदितिचेन्न। हंसादिनाविभज्यमानत्वात्॥
अथगरुडमांत्रिकयोर्भावनातिशयेनैक्येवदितिचेन्न। सुप्त्या
दौभावनाविच्छेदेपूर्वरूपत्वावाप्तेः। अग्नितप्तायः पिण्डवच्च
न। वह्निशांतौअयसः कार्ष्ण्यादिवज्जीवस्यपुनर्दुःखित्वादि
संभवात्। यद्वागृहाविष्टजनवदेकत्वमपिन। तदैक्यस्यकादा
चित्कत्वात्। आहोस्विद्द्विकिरणावच्छिन्नदीपप्रकाशवदे
कीभाववच्चन। तारतम्येनप्रकाशद्वयस्यदर्शनवत् किंचित्ज्ञ
त्वसर्वज्ञत्वादिवैलक्षण्यसद्भावात्। स्वामिभृत्ययोर्भोगसा
म्येनैक्यवदितिचेन्न। सदासभयजीवनस्यजीवस्यमुक्तिसुख
वार्त्ताभावात्। गोगवययोरिवजीवस्येश्वरसाम्यमात्रेणैक्यंचन।
इदमनेनसदृशमितिवस्तुद्वंद्वदर्शनात्। सुरतसुखपरवशमिथुना
विनाभाववच्चनयुज्यते। व्याध्याद्युपप्लवेसतिभोगविच्छेदा
दैक्यविच्छेदात्। यद्वामृद्घटन्यायेनकारणस्यैवकार्यात्मना
वस्थानादेकत्वमित्यपिन। सएवमायापरिमोहितात्माशरीर
मास्थायकरोतिसर्वमितिश्रुतेः। अवस्थितेरितिकाशकृत्स्नइ
तिसूत्राच्च। जीवस्यकार्यत्वाभावात्। नीलोत्पलादौगुण
गुणिनोरैक्यवच्चन। संसर्गोवाविशिष्टोवावाक्यार्थोनात्रस
म्मतइत्याचार्यसूक्तेः। पुरुषतच्छायाबिंबप्रतिबिंबस्थाणुपुरु
षादेरिवैक्यमितिचन॥तत्रछायाप्रतिबिंबपुरुषादेर्मृषात्वेनसत्ये
नस्वाधिष्ठानेनकथमैक्यंगच्छेत्। समसत्ताकयोरेववस्तुनोरै
क्यस्ययुक्तत्वात्। जीवस्वरूपंतावत्। बुद्धेर्गुणेनात्मगुणेनचै
वह्यारायमात्रोह्यवरोपिदृष्टइति। सचानंत्यायकल्पतइतिचश्रु
तेः। उपाधिवशादेवभिन्नवद्भातिनस्वरूपतः। तस्मात्तयोरैक्यं

कथमितिचेच्छृणु । अन्तःकरणोपाधिपरिच्छिन्नस्येवस्थि तस्यजीवाख्यस्यशोधितत्वंपदार्थस्यकूटस्थस्यापि ब्रह्मणश्चघटाकाशमहाकाशयोरिवसमसत्ताकयोः परमैक्यंवदान्तिब्रह्मविद इत्यर्थः । ब्रह्मवित्ब्रह्मैवभवतीत्याद्याश्रुतयश्चएवंएकीभावं प्राप्तस्यनपुनरावर्तितिरितिमानानिशतशस्सन्ति । तथाचमम अंतरात्मात्वयिअखण्डानंदरूपे ब्रह्मणिनिविशताम् । तेन नित्यमुक्तोभवामीतिभावः ॥ ३८ ॥

मू० ॥ अन्तर्बाष्पाकुलितनयनानंतरंगा नपश्यन्नग्रेघोषंरुदितबहुलंकातराणा मश्रृण्वन् । अप्युत्क्रान्तिश्रममगण यन्नन्तकालेकपर्दिन्नंघ्रि द्वंद्वेतवनिवि शतामन्तरात्मन्ममात्मा ॥ ३९ ॥

टी । हेकपर्दिन्पुनरेकंवरंवृणुयांक्षमस्व । ममान्तकालेमरणसमयेअन्तर्बाष्पाकुलितनयनान् । अन्तर्दुःखाग्निवेगेनसमुत्पन्नेनबाष्पेणाश्रुजलेनाकुलितेसंक्षुभितेनयनेयेषान्तान् । अन्तरंगान्सदाहृदयंगमान्प्राणतुल्यान् । प्रियतमानित्यर्थः । यद्दर्शनादेवसद्योदुस्सहश्शोकोऽभिवर्धते ।यथालोकेबालालीलासमयेचरणस्खालित्येनशिलादौपतित्वारुदन्तोपि स्वजनानुद्वीक्ष्यहाहेत्याक्रोशन्ति । तद्वन्मूर्खानामापन्नानांसुहृद्दर्शनेदुःखमभिवर्द्धतेएव। शत्रु दर्शनेतुहेदुर्विधे।।यइमेजिजीविषन्तितेषांपुरएवाहमेकोमरिष्येहाहेतीर्ष्ययारुदति।। यथाकथंचित्म्रियमाणस्यमूर्खस्यदुःखमेवापतति । तस्मात्तान्सुहृदोऽरींश्चापश्यन्नव

ोकयन्। शत्रुवदविलोकयन्विलोकयन्अग्रतश्शयानस्यममदी
ास्याग्रेकातराणांमरणावस्थान्दृष्ट्वाविभीतानांरुदितबहुलंशोक
समुत्पन्ननानाचारितप्रलापमेदुरंघोष माक्रन्दनमपिबधिरवदशृ
ण्वन् । प्राणोत्क्रान्तिश्रममपितृणवदगणयन्मूर्च्छावद्विस्मृतसर्व
क्लेशोभवेयम् । अन्तरात्मन्तर्हिममात्मान्तःकरणंतवांघ्रिद्वंद्वे
निविशतांनितरांस्थालीजलंजलनिधाविवघटाकाशोवामहाका
शेइवनिविशतांप्रविशेदित्यर्थः । ननुयद्येवंबह्वन्तरायेमरण
समयेकथमसंभवमात्मसमर्पणम् । शिवएवाहमितिभावसम्ब
द्धम् ज्ञानंकथंसंभवेदितिनशंकनीयम् । पुरोक्तद्वाविंशतिश्लो
केइदंप्राप्यतेनिर्भयोस्मीतियदुक्तंतत्तथैवभवितुमर्हति । शिवप्र
सादलब्धस्यसकृच्छिवोहमस्मीतिसंशयविपर्यासरहितस्यस्वरू
पानुभवस्यनकदापिविस्मृतिरन्यविघातोवाभवेत् । तथाचोक्तं
श्रीविद्यारण्यमुनिभिः॥ नीरोगउपविष्टोवारुग्णोवाविलुठन्भु-
वि॥मूर्च्छितोवात्यजत्वेषप्राणान् भ्रांतिर्नसर्वथा । दिनेदिनेस्व
प्नसुप्त्योरधीतेविस्मृतेप्ययम् । परेद्युर्नानधीतस्स्यात्तद्वद्वि
द्यानन्श्यति । प्रमाणोत्पादिताविद्याप्रमाणंप्रबलंविना । नन
श्यतिनवेदांतात् प्रबलम्मानमिष्यत इति । तस्मात्प्रारब्धांते
प्राणादिकलाविलयावसरेत्वद्रूपस्सन्नेवत्वद्रूपोभवामीत्यर्थः । ब्र
ह्मैवसन्ब्रह्माप्येति । विमुक्तस्तुविमुच्यतइतिश्रुतेः । मनसिनि
श्चितमेवार्थंकार्यगौरवाद्भगवतेन्यजिज्ञपदितिभावः ॥ ३९ ॥

मू० ॥ चारुस्मेराननसरसिजं चन्द्रलेखा
वतंसं फुल्लन्मल्लीकुसुमकलिकादामसौ
भाग्यचोरम् ॥ अन्तःपश्याम्यचल

सुतयारत्नपीठेनिषण्णं लोकातीतंस
ततशिवदंरूपमप्राकृतन्ते ॥ ४० ॥

टी. हेदेवयद्यपि । श्र । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्रोत्रन्तदपाणिपादमितिश्रुतिविहितात्मशिवरूपं सकृत्साक्षात्कृतन्त्वत्प्रसादात्तथापि॥प्रत्यक्द्वारकमण्डलेकुशयुतेसंस्थाप्यशिष्यंपदादूर्ध्वंप्रोक्ष्यसुताड्यवीक्ष्यभसितैः केभ्युक्ष्यनाभेरधः । उल्लिख्यास्त्रकशैः परंचहृदयेसंस्पृश्यसञ्चिंत्यतंमन्त्रन्यासपट्टाक्षिबन्धनमथोगृह्यात्तपुष्पौकरौइतितन्त्रदीक्षाविधिः । चक्षुरुन्मीलययस्तत्वंध्यात्वाशिष्यंसमीक्षयेदित्यादि वैदिकदीक्षाविधानंदृश्यते॥तादृशगुरुदीक्षाद्दृष्टिपातार्थेनिष्कलसकलरूपस्यपरमेश्वरस्यदिदृक्षयापुंनार्विज्ञापयति । चारुस्मेरेति । फुल्लन्मल्लीकुसुमकलिकादामसौभाग्यचोरम् । स्वच्छमल्लिकामुकुलदाम्नः यत्सौभाग्यंसौन्दर्यंतच्चोरयतिमुष्णातीतितथोक्तम् । अचलसुतयागिरिजयावामांगरूपिण्यासाकं॥ साकंसत्रासमंसहेति। नि । एकीभूतमित्यर्थः । रत्नपीठेयोगासनेनिषण्णंस्थितंचारुस्मेराननसरसिजंमनोहरमंदहासविलसितमुखपंकंजचंद्रलेखावतंसश्चतुर्थीचंद्रकलैवावतंसंशिरोभूषणंयस्यतत् । लोकातीतंआत्मतत्वविद्यातत्व शिवतत्वतयावर्त्तमानचतुर्विंशत्युत्तरद्विशतभुवनतान्निष्ठचेतनान्यतिक्रम्यसर्वस्योपरिवर्ततइतिलोकातीतम् । सततशिवदंनित्यमंगलमुक्तिप्रदमप्राकृतंप्रकृतिजन्यभूतभौतिकांशरहितंपारमार्थिकंसर्वकारणंशक्तिशबलितं॥ शांडिल्योपनिषदिशाण्डिल्यः । कथमरूपंब्रह्मजगत्कारणंभवतीति । सहोवाच । अथाप्यरूपस्यब्रह्मणस्त्रीणिरूपाणिभव

ग्नेति। यत्सत्यज्ञानानंतंनिष्कलंनिरंजनंसर्वगतंतदिदन्निष्कलंरूपं॥ अथास्ययासहजास्तिमूलप्रकृतिर्मायालोहितशुक्लकृष्णरूपा॥ तयादेवःकृष्णपिंगलोमहेश्वरईष्टे। तदिदमस्यनिष्कलसकलरूपंअथास्यदेवस्यात्मशक्ति रिंदीवरदलप्रख्याचतुर्बाहुरघोराऽपापकाशिनी यातदिदंसकलरूपंवदंतीतिश्रुतेः । निष्कलसकलरूपंसशक्तिकंगुरुमूर्त्तिमंतः पश्यामिभावयामीतिभावः अत्रसकलस्यशक्तिरूपस्यइंदीवरदलप्रख्याचतुर्बाहुरिति वचनात्शक्त्यंशस्यविष्णोश्चब्रह्मणस्तृतीयरूपेअंतर्भावइतिगम्यते॥ ४० ॥

मू० ॥ स्वप्नेवापिस्वरसविकसद्दिव्यपंकेरुहाभंपश्येयं किंतवपशुपतेपादयुग्मंकदाचित्। क्वाहंपापःक्वतवचरणालोकभाग्यन्तथापिप्रत्याशाम्मेघटयतिपुनर्विश्रुतातेनुकंपा ॥ ४१ ॥

टी. पशुपतेस्वप्नेवापिस्वपितंस्वाप स्वप्नश्चैकार्थः।तृष्वपश्येजाग्रत्सुषुप्त्योस्संध्यावस्थायामित्यर्थः । स्वरसविकसद्दिव्यपंकेरुहाभंस्वरसेन स्वनिष्ठपरिपाकवशेनसंफुल्लसरोरुहवद्भास्वत्। तेतवपादयुग्मंकदाचित्। सकृद्वापश्येयंकिं॥कथंचित्स्वप्नलब्धदर्शनस्यास्पष्टतयामलिनप्रतीतिरेवभवेत् । तथापिजाग्रत्कालीनचिरवांच्छातिशयेनस्वप्नेपिदृढमवगच्छामीतिभावः। पुनस्स्वस्यायोग्यतामीशदर्शनभाग्यगौरवं चालोच्याहपापोहं पिबतिपापिष्ठमितिपापंतदस्यास्तीतिपापः । क्वयावद्दूरेवर्त्ते

तव चरणावलोकभाग्यंकियद्दूरेस्ति। परस्परमतिदूरमेव। त र्हियथाफाललिपिरस्त्विवतिचेत्। तेविश्रुतावेदलोकप्रसिद्धाअ नुकंपाद्दयामेपुनः पुनः प्रत्याशांघटयतिसंचोदयति। कथम्। निजद्रोहिणांदक्षबाणासुरमुखानां देवोगाणापत्यमादिशत्। मुसलपाषाणप्रहर्तॄणांस्वपदंददौइतिनाश्रौषीः किं। तूष्णीमनर्थि कयोष्ट्रासिकयाकिंलभ्यते॥ सुजनसुलभमीश्वरमाश्रयेतिमांघ टयतीतिभावः। विषमंवर्ण्यतेयत्रघटनाननुकूलयोरितिलक्षणा द्विषमालंकारः। अत्रापिगुरुमूर्त्तिदिदृक्षा॥ ४१॥

मु०॥ भिक्षावृत्तिंचरपितृवनेभूतसंघै र्भ्रमेदं विज्ञातन्तेचरितमखिलंविप्रलि प्सोःकपालिन्॥ आवैकुण्ठद्द्रुहिणम खिलप्राणिनामीश्वरस्त्वंनाथस्वप्नेप्य हमिहनतेपादपद्मन्त्यजामि॥ ४२॥

टी. हेकपालिन् कंशिरोनासादारुघट्टनात्पालयतीति कपालः सोऽस्यहस्तेऽस्तीतिकपाली भिक्षावृत्तिंभिक्षयैववृत्तिं जीवनंचरआचर॥ पितृवनेश्मशानेभूतसंघैःभूतप्रेतपिशाचस मूहैस्सहभ्रम॥भ्रमणंवाकुरु॥ विप्रलिप्सोः।विप्रलंभोविसंवादइ ति। नि। किमपिलब्धुमिच्छयातद्विपरीतार्थप्रकटनंविप्रलंभः। तत्कर्त्तुमिवाभिनयतस्तेतवइदंचरितमखिलंआवैकुण्ठ द्रुहिणं आङ्अभिव्याप्तौकदाचिद्विकुण्ठायाम्मातरिजातइति वैकुण्ठो हरिः। असुरांद्रुह्यतीतिद्रुहिणोविधिः। हरिविधीआरभ्यअ खिलप्राणिनांविज्ञातमेव। किंचत्वमखिलप्राणिनामीश्वरश्चा

प्रीतिआवैकुण्ठद्रुहिणंयथातथासर्वैर्विदितमेव । मूर्खैरविदित मपिप्रायशोविज्ञातमित्यर्थः । तथाचभागवते । यस्यानव चरितम्मनीषिणोगृणन्त्यविद्यापटलंबिभत्सवः । निरस्तसा म्यातिशयोपि यःस्वयंपिशाचचर्यामचरत्सतांगतिरिति । इह त्वमखिलप्राणिनामीश्वरइतिजानन्नहंस्वप्नेपिते पादपद्मनत्य जामिममसादृढंबध्नामीतिभावः । अत्रेश्वरस्यभिक्षाटत्यादे स्स्वाभाविकत्वेपिविप्रलंभकत्वकथनादहेतोर्हेतुत्वकथनात्हेतूत् प्रेक्षालंकारः ॥४२ ॥

मू० ॥ आलेपनंभसितमावसतिश्मशा
नमस्थीनितेसततमाभरणानिसन्तु ।
निह्नोतुमीशसकलश्रुतिपारसिद्धमैश्व
र्यमंबुजभवोपिचनक्षमस्ते ॥ ४३ ॥

टी ॥ ईशसर्वेश्वरतेतवालेपनंहिमांबुकर्पूरगोरोचनाका श्मीरमिलितांगलेपस्थानीयंभसितमेवास्तु सर्वजगन्निटिलनय नाग्नौहुत्वातद्भस्मजगद्धितायलिंपय॥ अपिचतवावसतिर्वास भूमिःप्रदोषकालमारभ्याप्रभातन्नटनार्थं स्थितिश्मशानमेवा स्तुअष्टमूर्त्तेरीश्वरस्य सर्वाकारेणसर्वत्रव्यापकत्वात्तत्सदृशीदृ त्तसभासकलाभूमिरपिश्मशानभूमिरेवेति ब्रह्मतर्कस्तवेकाथित म् ॥ दग्धेतवाक्षिदहनेनचराचरेस्मिन्त्वत्तोखिलं भुवनमेवमहा श्मशानम् । तत्रस्थितिंविबुधनाथतवासहायां संतश्मशानवस तिंसमुदाहरंतीति ॥ श्रीशिवात्त्वत्तःअखिलस्यशवस्यशयनस्था नात्मकेश्मशानेसर्वध्वंसक स्त्वमेकएवासहायोवससिनटसिवे

त्यर्थः। इयंश्मशानवसतिः खलानामपहासास्पदमितियत्तत् बुधानामिष्टापत्तिरेवेतिभावः । किंचअस्थीनिशरीरगतानित वाभरणान्याकल्पानिसन्तु । शिवराघवसंवादेअस्थीनिसंख्या यंत । अस्थ्नांशरीरेसंख्यास्स्युषष्ट्युचत्तरशतत्रयं।।द्वेशतेत्वस्थि संधीनांस्यातांतत्रदशोत्तरे। कोरकाःप्रतनानुन्नास्सीविन्यस्स्यु रुलूखलाः । सामुत्गामण्डलाश्शंखावर्त्तावायसतुण्डकाः। इत्यष्टधासमुद्दिष्टाश्शरीरेष्वस्थिसंधयइति। किमर्थमीशस्यैता न्याभरणान्यासन्नित्यत्रोच्यते। पुरासोमकासुरेणवेदोऽपहृतः हरिर्मत्स्यरुपीतंहत्वायथापूर्ववेदंप्रतिष्ठाप्य तत्गर्वेणसमुद्रमुत्कू लंचालयन् गुहेनशिक्षितस्सन्नन्तेस्वनेत्रवलयास्थीनिदेवायद दौ । आदिकूर्मोमन्दरोद्धारगर्वेणजलधिमतिवेलंडोलयन्गणे शेनपीडितस्स्वप्रष्ठकपालन्ददौएवमादिभिः आदिवराहोवीर भद्रेणनृसिंहश्शरभेण त्रिविक्रमस्त्वाकाशभैरवेणचसमुत्पाटि तस्सन्दंष्ट्राचर्मवीणादण्डान्ददुः।पुनःकस्मिंश्चित्कल्पान्तेसर्वेदे वास्स्वस्वविमुक्त्यर्थंदेवकपर्दनिस्सृतगंगास्थिप्रक्षेपमहिमानं वि दित्वासाक्षाद्धराविग्रहाभरणतयास्वस्वास्थीनि उपदात्वेनप्रा र्थनपुरस्सरंहरायदत्वाविमुक्ताबभूवुरिति शंकरसंहितासनत्कु मारसंहितयोर्दृश्यते। एवमेवकेशोपवीतभुजगादिधारणंसर्व मपिजगदुपकारायैव । सनत्कुमारसंहितायाम् ।। मायामो हितंवेदव्यासंप्रतीश्वरवचनम् ।। मदंगस्वेदसंभूतौब्रह्मनारा यणाविमौ।।यस्त्वयाचसदाविष्णुस्तूयतेनियतात्मना।।पश्या सौसर्वकार्याणित्यक्त्वामामेवसेवते ।। अनेकमुण्डकोटीभि रियम्मालाशिरोगता ।। ब्रह्मणश्चकपालानिविनष्टस्ययुगेयुगे ।। मत्स्यकूर्मबराहाणांनारासिम्हाजिनम्मम ।। वामनस्यचकं

कालदण्डम्ममकरेधृतम् ॥ याश्चामूरपरामालाग्रीवाहस्तक टिस्थिताः ॥ नारायणस्यतनवोविनष्टस्ययुगेयुगे ॥ मत्स्या क्षिकूर्मपृष्ठास्थिदंष्ट्रांवाराहसंभवाम् ॥ ममांगेतानिपश्याद्यशि क्षितानांयुगेयुगेइत्यादि ॥ तस्मात्तवालेपननिवासादिकंसर्वंस र्वानुग्रहायैवेत्यर्थः । एवंश्रुतीनांपारमवसानंतत्रशरभश्रुत्यन्ता दौसिद्धंप्रसिद्धन्तवैश्वर्यंतवेश्वरस्यमहिमानं निह्नोतुंप्रच्छादयि तुमंबुजभवोपिनक्षमःनसमर्थः । सकलश्रुतिपारासिद्धमैश्वर्यं कीदृग्विधमित्यत्रोच्यते । सर्वकारणत्वपूर्णत्वसर्वैश्वर्यनिधि त्वाद्यनितरसाधारणमहामहिमव्यंजकानि मानानिसन्तिहि श्वेताश्वतरमन्त्रे । किंकारणंब्रह्मकुतस्मजाताजीवामकेनेत्युप क्रम्यकालादिकारणत्ववादिमतमाक्षिप्य ध्यानवतान्तेषाम्म ध्येश्रीमहादेव्याविर्भूययक्षप्रश्न वत्साक्षाच्छक्तिमन्तमीश्वरमु वाच । शिवपुराणेपि । मुमुक्षयापुराकेचिन्मुनयोब्रह्मवादिनः ॥ संशयाविष्टमनसोविमृशन्तियथातथम् । किंकारणंकुतोजाता जीवामःकेनवावयं । केनवर्तामहेशश्वत्सुखेष्वन्येषुचाप्यमीति तेतर्कयन्तःपुनः । तेध्यानयोगानुगताःप्रापश्यन्शक्तिमीश्व रीम् । पाशविच्छेदिकान्देवीन्निगूढांस्वगुणैर्भृशम् । ततोवि च्छिन्नपाशास्तेसर्वकारणकारणम् । शक्तिमन्तम्महादेवमप श्यन्दिव्यचक्षुषेति । पंचब्रह्मोपनिषदि । माययामोहिता श्शंभोर्महादेवंजगद्गुरुम् । नजानन्तिसुरास्सर्वेप्यहोकारणका रणमिति । यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएवके वलः । तदक्षरन्तत्सवितुर्वरेण्यंप्रज्ञाचतस्मात्प्रसृतापुराणीति । योगयाज्ञवल्क्यश्च । सिसृक्षुरेकएवाग्रेसमासीनश्शिवस्स्वयं । इच्छागुणमयीम्मायांसूक्ष्मरूपामपाकरोत् । तयातदात्मकंवि

षंणुस्स्रष्टापालन्दिवौकसामित्यादि । सएवसमाछ्युपदेशप्रका
रे॥ ब्रह्मादिकार्यरूपाणिस्वेस्वेसंहृत्यकारणे। युक्ताचित्तस्तदा
त्मानंयोजयेत्परमेश्वरमिति । सभापर्वाणि । उमार्धविग्रहंदे
वंवरदंसर्वकारणमिति । भीष्मपर्वाणि । यत्रभूतपतिस्स्रष्टास
र्वान्लोकान्सनातनः । ईश्वरश्चेतनःकर्तापुरुषःकारणंशिवः
विष्णुर्ब्रह्माशशीसूर्यश्शक्रोदेवाश्चसान्वयाः । सृजंतंग्रसतेचै
तान्तमोभूतमिदंयथा । अप्रज्ञातंजगत्सर्वन्तदाह्येकोमहेश्वरइ
ति । शान्तिपर्वाणि । सएषभगवानीशस्सर्वतत्वादिरव्ययः ।
सोसृजद्दक्षिणादंगात्ब्रह्माणंलोकसंभवम् । वामपार्श्वात्तथा
विष्णुंलोकरक्षार्थमीश्वरइति । आश्वमेधिकपर्वाणि ॥ अ
सृजच्चभूतादीन्सर्वान्लोकान्सनातनः ॥ स्थितस्सर्वो
परिस्थाणुस्तंप्रपद्येमहेश्वरम् ॥ तथासर्वव्यापकत्वमानानि ॥
सर्वोवैरुद्रस्तस्मैरुद्रायनमोअस्तु । ईशावास्यमिदंसर्वंयत्किंच
जगत्यांजगत् । सर्वव्यापीसभगवान्तस्मात्सर्वगतश्शिवइति ।
दिशंभित्वासर्वांल्लोकान्व्याप्नोतिव्यापयतीति व्यापनाद्यापी
महादेवइति । शिवज्ञानादेवमुक्तिरितिश्रुतयः । ज्ञात्वादेव
म्मुच्यतेसर्वपाशैः । यदाचर्मवदाकाशंवेष्टयिष्यन्तिमानवाः ।
तदाशिवमविज्ञायदुःखस्यान्तोभविष्यतीति । एवंशिवस्यैश्व
र्यप्रतिपादकवाक्यानिशतशस्सन्तिद्रष्टव्यानि । इत्थंभूतंश्रुति
शतसिद्धंतवविविधमैश्वर्यंनिह्नोतुंआच्छाद यितुमपवदितुंवा
अंबुजभवोपिनक्षमोनसमर्थइत्यर्थः । श्रीशिवानुग्रहाद्वेदादिस
कलशास्त्रोपदेष्टाचतुर्मुखस्ववचनविरुद्धप्रविलपनात् बिभ्येदि
तिभावः । पूर्वंद्विचत्वारिंशच्छ्लोकपर्यन्तंमन्दाक्रान्तावृत्त
मेव। अयन्तु॥ उक्तंवसन्ततिलकन्तभजाजगौगस्सबोद्धतेयमु

दिताम्भनिकाश्यपेन । उद्धर्षिणीतिकथितामुनिसैन्धवेनशो भावतीतिकथिताभुजगाधिपेनेति विकल्प्यतेवसन्ततिलकमेवे त्यर्थः ॥ ४३ ॥

मू । विहरपितृवनेवाविश्वपारे
पुरेवारजतगिरितटेवारत्नसानु
स्थलेवा । दिशभवदुपकण्ठेदे
हिमेभृत्यभावम्परमशिवतव
श्रीपादुकावाहकानाम् ॥४४॥

टी । नाथत्वंपितृवनेभूतप्रेतगणान्वनतीतिपितृवनंतस्मि न्पितृवनेरुद्रभूम्यामित्यर्थः । ननुश्रीरुद्रस्यश्रीकैलासरत्नसा नुमन्दरकन्दराद्याविहारभूमयः । पुनश्श्रीकाशीकेदारश्रीशैल श्रीकालहस्तिचिदंबरादयश्चसन्ति । कचिद्रुद्रभूमिरितिकथं प्रसिद्धिरितिचेदुच्यते । श्रीरुद्रआकाशवत्सर्वगतएव । त स्यसर्वगस्यतत्रापिवासोभवति । अन्येतद्भमनभियाद्यपसर्पन्ति ततोरुद्रभूमिरितिव्यवहरन्तिअयोध्याधिपशब्दवत् । किंच श्रीरुद्रस्यनगरग्रामादौसर्वत्रापितस्यैव नित्यनिवासाद्वास्तोष्प तित्वप्रसिद्धेः । तथाचापस्तंबः । नकुस्त्याग्रामंप्रविशेद्य दिप्रविशेद्वास्तोष्पते इतीमामृचंजपेदन्यांरौद्रींवावास्तुशिवंभव तीति । तस्मात्सर्वमपिशिवस्थलमेवतत्राकिंजहातिकिंगृह्णातीति भावः । पितृवनेवाविहर ॥ अथवाविश्वपारेविश्वस्मादुपरिपुरो क्तचतुर्विंशत्युत्तरद्विशतभुवनानामुपरिपुरेवा । उत्मनान्तस कलभुवनातीतसोमलोकाख्यपराशिवपुरेवा विहररजतगिरि

तटेवाश्रीकैलासमंदरहिमाचलमहाकैलासे वारत्नसानुस्थलेवा विहरदेवतवस्वेतरस्यसर्वस्यमृषात्वेनतरतमज्ञानानुपपत्तेः नि स्पृहस्यनिरंशस्यव्योमवत्संकोचविकासाभावस्यस्व जनानुग्रहा यकेवलंआदर्शप्रतिबिंबवत् आकस्मिकेन्द्रचापवाद्विचित्ररूपस्स्वां बमूर्त्तिस्सन्यत्रकुत्रापिवाविहर ॥ हेमहेशतवोपकण्ठेकण्ठस्य समीपमुपकण्ठन्तास्मिन् तवश्रीपादुकावाहकानांश्रीनन्दिभृंग्या दीनांभृत्यभावंसेवकत्वंदिशप्रयच्छ । एतावद्भाग्यंलब्धंचेत् कृतकृत्योस्मीतिभावः । अत्रेश्वराविषयमहिम्नांस्फुटंप्रतीय मानत्वात्प्रेयोलंकारः ॥ ४४ ॥

ननुबहवस्सुराश्रूयन्तेतत्राढ्यवदान्यन्न्यायेनयंकश्चिदुपा सित्वाकृतकृत्योभवेतिचेन्न । तत्रबहवःपरमेश्वरतयाह्यर्थवा दश्रुतिषुश्रूयन्ते । नेदंजगत्अनीश्वरंबह्वीश्वरंवाभवितुमर्हति। तेप्रशंसामात्रेणेश्वराइवकल्प्यन्ते । परमार्थःपरमेश्वरस्त्वमेक एवेतिविज्ञापयति ॥

मू । विविधमपिगुणौघंवेदयन्त्वर्थ
वादाः परिमितविभवानांपामराणां
सुराणाम् । तनुहिमकरमौलेताव
तात्वत्परत्वेकतिकतिजगदीशाः क
ल्पितानोभवेयुः ॥ ४५ ॥

टी । तनुहिमकरमौलेहिमंकरोतीतिहिमकरःतनुस्सूक्ष्मो हिमकरोमौलौयस्यसःतनुहिमकरमौलिः । चतुर्थ्यांपंचम्यांवा चन्द्रस्ययावत्यःकलास्तावतीभिः कलाभिर्युतंचन्द्रमसंकिंचिद्वा

मभागेमणिमकुटजटाघटितनिटिलसन्धौबुभुक्षुजनविज्ञापकान्न
सत्रमुखनिबद्धध्वजपटीमिवमुमुक्षु जनसमाश्रयणीयत्वबोधा
यशिवज्ञानमयचन्द्रमसन्धत्ते। शैवाश्चाहुः। ज्ञानचन्द्रकलाचू
डन्दशदिक्बाहुमण्डलमिति । चन्द्रमौलेअर्थवादाःलोकाक्षि
राहार्थवादलक्षणंतदिदमुच्यते। मन्त्रब्राह्मणयोर्वेदनामधेयं॥
कर्मचोदनाब्राह्मणानि। ब्राह्मणशेषोऽर्थवादोनिन्दाप्रशंसाप
रकृतिःपुराकल्पश्च। अतोन्येमन्त्राअनाम्नातास्त्वमन्त्राइत्य
र्थवादश्चतुर्धाविकल्पितःतत्रनिन्दारूपोऽर्थवादस्तु॥यदश्रुशी
र्यतातद्रजतं हिरण्यमदक्षिण्यमश्रुजमिति। सोब्रवीद्वरंवृणै ॥
मदग्राएववोग्रहाग्रह्यन्ताइति + तस्मादैन्द्रवायवाग्रग्रहाग्रह्यन्ते ।
तमघ्नन् सोऽपूयत्तंदेवानोऽयाधृष्णुवन्तेवायुमब्रुवन्निमंन्नस्वद
येति। सोब्रवीद्वरंवृणैमदेवत्यान्येववःपात्राण्युच्यन्ताइत्येव
मादिर्वायुप्रशंसापूर्वककर्मप्रशंसार्थवादः । विश्वस्मादिन्द्रउ
त्तरः। अग्निर्वैदेवानामवमःविष्णुःपरमः। तदन्तरेणसर्वा
अन्यादेवताः। ब्रह्मादेवानांप्रथमस्संबभूवविश्वस्यकर्त्ताभुव
नस्यगोप्ता॥इन्द्रोदेवानामभवत्पुरोगाइत्यादयस्तत्प्रशंसका
र्थवादाः। पामराणांपाप्मानंराःतीग्रृर्णन्तीतिपामराः। रा#
आदाने॥ननुशक्रादयःकथमिवपापंयान्तितेपितथाविधायदि क
थमस्मदुपास्याभवन्ति॥श्रीसूतसंहितायाम्। ब्रह्मविष्णुमहेशा
नान्तथातेषांद्विजर्षभाः। आविर्भावविशेषाणांपुण्यपापादयो
नहीति। श्रु। नहवैदेवान्पापंगच्छतीतिश्रुतेश्च ॥ लोके
पिबहवोदेवान् समुपासतेतेभ्यस्तेभुक्तिम्मुक्तिंचादिशंतीतिशा
स्त्रानुभवसिद्धमेव॥ तर्हिकथंपामरत्वंतेषामितिचेच्छृणु । प
राशरपुराणे। विग्रहस्संप्रदानंचयुगपत्कर्मसन्निधिः ॥ श्री

तिःफलप्रदत्वंचाविद्यतोहिपरात्मनः ॥ ब्रह्मविष्णुमहेशानांतदं
शानांतथैवच ॥ देवादीनांचाविद्यंतेविग्रहादीनिपंचच ॥
शिवस्यपरतत्वस्यस्वभावस्सकलंशुक ॥ तदधीनंतदन्येषामि
तितत्वविदांस्थितिः ॥ अतस्सकलजंतूनांतदेवपरमंपदम् ॥
वेदितव्यंविशेषेणविद्ययाहिपरागतिः ॥ अतोवेदनपर्यंतंभ
क्तिध्यानजपार्चनम् ॥ अन्यच्चवेदसंसिद्धंप्रकुर्यादास्तिकोज
नः" ॥ इत्युक्तत्वात्सर्वंपरमेश्वराधीनमेवाऽन्येषांवैभवमित्यत
श्चसुराणांपामरत्वमस्मदाद्युपास्यत्वंचास्त्येव । तेषांतेजोवि
शेषेणप्रत्यवायोनविद्यतइतिन्यायेनकर्मलेपःक्वचिन्नास्तिक्वचि
दस्त्येवेत्यवगम्यतेतथाहि ॥ कुत्रचिदश्वमेधेपत्न्यभिमंत्रणात्व
सरेशक्रोऽश्वलिंगंप्रविश्यरहःकृत्यंचकार।तद्विदित्वापिद्विजाः।
यज्ञकर्ताचदेवेन्द्रोवेदकर्ताचवाक्पतिः ॥ अहमेवजगत्कर्ताम
मकर्तामहेश्वरइतिकूर्मवचनमनुसृत्यनदूष्यतेऽद्ध्वरइत्यवदन्।श
क्रस्त्वस्यकर्मासंगतिंकौषीतकीश्रुतौस्वयमेवोचेत्रिशीर्षाणंत्वाष्ट्र
महनमरुन्मुखान्यतीन्सालावृकेभ्यःप्रायच्छमित्यन्ते नमेलोमच
मीयतइति । सएवेन्द्रोमहामाहेश्वरगौतमपत्नीधर्षणनिमित्तक
पापफलमधिकमनुबभूव । ब्रह्मापिस्वपुत्रीविषयरिरंसादोषे
णनलिप्यते । सएवसाक्षाच्छिवदूषणाघात्स्वप्रधानशिरश्छे
दक्लेशमनुभूयचतुर्मुख एवासीदितिपुराणेद्रष्टव्यम्।विष्णुरपि
स्वेनस्वांशेनवादानववालिबलिजयद्रथादिव्याजवधेननदूष्यते
।पारमेश्वरवरभृगुपत्नीवधनिमित्तकशापपापाधिगततिर्यग्योनि
त्वभीत्यानिजभक्तैरेकादशीव्रतमनुतिष्ठतीतिस्कान्दे । एका
दशानांरुद्राणांप्रीत्यर्थंगरुडध्वजः । पक्षद्वयेपिसततंकरोत्येका
दशीव्रतमित्यादि । किंचश्रीकृष्णोपि॥महामाहेश्वरशापायुधम

हामुनेरुच्छिशष्टलेपप्रभावेनसर्वशत्रुजेतृत्वंसकलास्त्र शस्त्रानभि भवत्वादिकंचाप्तवानितिभारतेआदि पर्वण्येकोनषष्ठिशततमा ध्याये ॥ नतुपादतलेलिप्ते ॥ इतिमहामुनिवचसासहकथितम् ॥ तत्रैवमौसलपर्वणि ॥ तस्यमाहेश्वरस्यैवापराधेनसमूल कुलहानिरासीदितिच॥ तस्यव्याधशरविद्धस्यभगवतोवचनात् । अयुद्धेनहतोवालीतस्येदंकर्मणःफलमित्यादिकुर्मसंपर्कश्चप्र तीयते। एवंयद्यपिमत्स्यकूर्माद्यवतारस्सर्वोऽपिवेदप्रतिष्ठापनादि जगद्धितकार्येव।तथापि॥शिवद्रव्यापहरणंशिवनिन्दाचकुत्रचि त्॥शिवभक्तापराधश्चप्रायश्चित्तैर्ननश्यतीतिकूर्मवचनात्। शिव शैवद्रोहपापेनलिप्यन्तेनान्येनेति विषयव्यवस्थाकार्याततश्चपा मराणामित्यर्थः। अपिचपरिमितविभवानांअस्यैतावदायुरेता वानधिकारएवमैश्वर्यमित्यादि । खण्डभूपानामायुधप्राकार सौधोच्छ्रायत्वकरितुरगवरभूषणादि विभवःपरिमीयतेयथा सार्वभौमेन । तथातेषान्देवानांवैभवंपरिमीयतेपरिगण्यतेप रमेश्वरेणेतिपरिमितविभवाः । सुष्ठुरान्तिदीव्यन्तीतिसु राः । तेषांसुराणांविविधमपिगुणौघंसर्वेश्वरत्वादिनानावै भवसंदोहंवेदयन्तु आवेदयन्तुनामतावताप्रशंसामात्रेणत्व त्परत्वेत्वत्तोपिश्रेष्टभावेतैस्तैर्हेतुभिः कल्पिताःकतिकतिजगदी शाःनोभवेयुः । असंख्याताजगदीशाःकल्पिताभवेयुरेवेत्य र्थः। तर्हितेषांपरस्पराविरोधेनकस्यचित्सर्गेच्छासमयएवान्य स्यसंहारेच्छाभवति । एवंसतिएकग्रामवासिग्रहस्थकलहावि नश्यत्ग्रामधर्मवत्जगाद्विनश्येदित्यर्थः । तेषामीश्वरत्वस्य स्वावकत्वेनकल्पितत्वात् । परमार्थजगदीशस्यतवनकापिक्ष तिरित्यर्थः ॥ यथाराज्ञःक्रीडार्थं भूपतिभटसामंतादिस

ङ्गिकदारुविकाराणांशिल्पिवरकल्पितानांक्रीडनकानां आह
वजयापजयश्रवणान्नोद्वेगसंरंभादिजायते तथांगाव्ययाद्यनंत
मंगलगुणगणनिदानस्यशंभोस्तत्वविदांवानकापिहानिः ॥
तथाहि ॥ उमाकांतस्यदेवस्यगणैर्युक्तस्यकोटिशः ॥ ममर्दच
रणौब्रह्मापाणीविष्णुस्समाहितः ॥ छत्रंशंभोर्दधारेंद्रोवायुश्चा
मरभृत्स्वयम् ॥ अथाश्वदेवतास्सर्वाजयशब्दमथाब्रुवन् ॥
ब्रह्मविष्ण्वादयोदेवाएकेचस्थाणुजंगमाः ॥ उमाधिपस्यतेस
र्वेबालक्रीडनकाइव ॥ नास्त्येवातोमहेशानात्कश्चित्तुल्योऽ
धिकोपिवेति ॥ सनत्कुमारसंहितावचनैश्शंभोःपूर्णानंदस्य
तवैभवमेववेदादयोऽभिवदंतीतिभावः ॥

अन्वयः । हेतनुहिमकरमौलेअर्थवादावेदभागाः ।
पामराणांपरिमितविभवानांसुराणांविविधमपि गुणौघंवेदय
न्तुनाम । तावतात्वत्परत्वेकल्पिताः ॥ कतिकतिजगदी
शानोभवेयुः । जगदिदंबहीश्वरंभवितुन्नार्हतीतिभावः ।
ननमययुतेयंमालिनीभोगिलोकैरितिलक्षणान्मालिनीवृत्तम् ।
शिवमस्तु ॥ ४५ ॥

मू ॥ बलमबलममीषांबल्बजानांवि
चिन्त्यम् कथमपिशिवकालक्षेपमात्र
प्रधानैः । निखिलमपिरहस्यन्नाथ
निष्कृष्यसाक्षात् सरसिजभवमुख्यै
स्साधितन्नःप्रमाणम् ॥ ४६ ॥

टी ॥ शिवसकलकल्याणनिलयबल्बजानांदुर्बलानाममी

षांप्रकृतानांहरिविधिशक्रमुखानांसुराणांबलम् । बलन्त्यनेनेतिबलंबलप्राणने ॥ नबलमबलंअस्यबलमधिकंतस्यबलंन्यूनमितिकथमपिकृच्छ्रेणशास्त्रेणतर्केणवास्तु॥कालक्षेपमात्रप्रधानैःकालस्यक्षेपोवृथाव्ययः । तन्मात्रमेवप्रधानंमुख्यफलंयेषान्तैःकालक्षेपमात्रप्रधानैर्विचिन्त्यांचिन्तामात्रमेवफलं ननिर्णयोभवेदितिभावः । तद्भवतुत्वत्सिद्धान्तःकथमित्यत्राह॥नाथनहिकाश्चिन्मेपक्षः किंतुनिखिलमपिरहस्यं कर्मोपासनज्ञानकाण्डत्रयेषु यद्यद्रहस्यंप्रसादोपदेशाभ्यामेवावगंतव्यं ॥ तत् साक्षात्सरसिजभवमुख्यै र्विधिहरिशक्रादिसुरवरैर्निष्कृष्यशास्त्राण्यालोच्य निर्णयंकृत्वासाधितंसिद्धांतितंयत्तदेवनःप्रमाणमित्यर्थः । तत्किमित्यत्रोच्यते । ब्रह्मगीतावचनं॥परमशिवसमुद्रेहंहरिस्सर्वदेवामनुजपशुमृगाद्याश्शीकराएवसत्यं । विमलमतिभिरेवंवेदवेदांतनिष्ठैर्हृदयकुहरनिष्ठंवेदितुंशक्यतेहि । मायाबलेनैवहरिंशिवेनसमानमाहुः पुरुषाधमाश्च । मोहेनकेचिन्ममसाम्यमाहुर्मायातुशैवीखलुदुस्तरेयम् । सनत्कुमारसंहितायां । व्यासंप्रतिविष्णुः । ओन्नमोवासुदेवायशिवशास्त्रावतारिणे । शिवलिंगार्चनव्यग्रचेतसेशिवजन्मने । यथार्थवचसानेनयोमांस्तौतिप्रहर्षितः । तस्याहंसुलभोव्यासनान्यस्याब्दशतैरपीति । परमार्थेश्वरस्यैश्वर्यपारमार्थिकम् । कल्पितेश्वराणामैश्वर्यमपिकल्पितमेवभवेत् । नवाओजीयोरुद्रात्त्वदस्ति । तमीश्वराणांपरमम्महेश्वरंतंदेवतानां परमंचदैवतमित्यादिश्रुतिभिः सर्वेश्वरस्यतेवीर्यशौर्यादिबलंप्रथितमेवेतिभावः । मालिनीवृत्तम् ॥ ४६ ॥

मू ॥ नकिंचिन्मेनेतरसमभिलषणी

यन्त्रिभुवनेसुखंवादुःखंवाममभवतु, यद्वाविभगवन् । समुन्मीलत्पाथोरुहकुहरसौभाग्यमुषितेपदद्वंद्वेचेतः, परिचयमुपेयान्ममसदा ॥ ४७ ॥

टी । हेभगवन्अयंभगवच्छब्दस्त्वय्येव मुख्यार्थइत्याहुः । ननुअथापियत्पादनखावसृष्टंजगाद्विरिंचोपसृतार्हणांभः । सेशंपुनात्यन्यतमोमुकुन्दात्कोनामलोकेभगवत्पदार्थइतिभागवतवचनान्मुकुन्दएवभगवच्छब्दार्थोमुख्यइतिचेन्न । अन्योपिभगवच्छब्दोमुनिसाधारणोऽस्ति । सएवगौणश्चानीश्वरेअशिवेप्रवर्तते । उत्पत्तिंचविनाशंचभूतानामागतिंगतिम् । वेत्तिविद्यामविद्यांचसवाच्योभगवानिति । पारमेश्वरंभगवत्त्वमनितरसाधारणन्दृश्यते । शिवागमे । ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसश्श्रियः । ज्ञानवैराग्ययोश्चैवषण्णांभगइतीरणात् । सर्वज्ञतातृप्तिरनादिबोधस्वतन्त्रतानित्यमलुप्तशक्तिः । अनन्तशक्तिश्चविभोर्विधिज्ञाषडाहुरंगानिमहेश्वरस्येति ॥ श्रीसुदर्शनाचार्याः ॥ऐश्वर्यमग्र्यमनुपाधिमतीचलक्ष्मिश्शौर्यंचवीर्ययशसीचविरागताच । एतेगुणाष्षडपितद्भगसंज्ञयोक्तास्संन्तीत्यनेनभगवानितितेनिराहुरिति । अथवाचस्पतिमिश्रैर्वेदशिवयोः साम्येनस्तूयते । षड्भिरङ्गैरुपेतायविविधैरव्ययैरपि । शाश्वतायनमस्कुर्मोवेदायचभवायच । किंचभगवच्छब्दः परमेश्वरएवेतिव्यंजयंतिश्रुतयः । अथर्वशीर्षे ॥ योवैरुद्रस्सभगवानितित्रयस्त्रिंशत्पर्यायेष्वभ्यासात्तत्रैव । अथकस्मादुच्यतेभगवान् । यस्सर्वान्भावानीक्षत्यात्मज्ञानान्निरीक्षयति

योगंगमयतितस्मादुच्यतेभवगवान् । एवंसहेतुकान्निर्वचनाच्च यत्रकुत्रापियत्किंचिन्मानेनकथितस्या शिवेश्रूयमाणस्यभगव त्वस्यस्वाभिमतदेवतास्तुतौ पर्यवसायात्श्रुतिसिद्धंभगवत्वंत्व य्येवेत्यर्थः । तर्हिपुनर्भगवाह्वरिर्भागवतमितिप्रसिद्धेःकागति रितिचेत् भगवत्प्रतिपादकत्वात्भागवतत्वंविष्णुपुराणादेरपि भागवतत्वमनिर्गलंप्रसज्जेततदपिन । पुनर्निर्मूलोपिशुक्रःशनै श्चरोवाशुक्रभगवान् शनैश्चरभगवानितिव्यवह्रीयते । तद्वत् ॥ तस्माद्विष्ण्वादौभगवच्छब्दोलाक्षणिकः शिवेत्वनन्यसाधार णोमुख्यइत्यर्थः । हेभगवन् नाथत्रिभुवनेपिमेचेतस्समभि लषणीयंचेतसासम्यक् अभिलषणीयंआशास्यंवस्तुकिंचिदपि नमेनेनस्मरामि। कर्मवशात् भाविसुखंसुष्ठुखनत्यशुभमितिसु खम् । खनुअवदारणे॥ दुष्टानिखानीद्रियाण्यत्रेतिदुःखम् । सु खंवादुःखंवाभाविफलंभवतुभावितव्यमेव । तथापिकिंचिदत्रा भ्यर्थ्यते । तदाममचेतश्चित्तंसमुन्मीलत्पाथोरुहकुहरसौभाग्य मुषितेविकसत्पद्मांतरालसौभाग्यातिशायिनी तवपदद्वंद्वेपरिच यमुपेयात् । प्राप्नुयादित्यर्थः । त्वत्पदसेवाबलाद्दुःखाद्यर्था न्नस्मरामीतिभावः । रसैरुद्रैच्छिन्नायमनसभलाग शिखरि णीतिलक्षणात् शिखरिणीवृत्तम्अभ्यनुज्ञालंकारः ॥ ४७ ॥

मू ॥ उदरभरणमात्रंसाध्यमुद्दि
श्यनीचेष्वसकृदुपनिबद्धामाहि
तोच्छिष्टभावाम् । अहमिहनुति
भंगीमर्पयित्वोपहारंतवचरणस
रोजेतातजातोपराधी ॥ ४८ ॥

टी । हेतातअहंउदरभरणमात्रंजठरापिठरीपूरणंकेवलं साध्यंसाधयितुंयोग्यंफलमुद्दिश्य संकल्प्यनीचेषुवर्णाश्रमव योवस्थादिधर्मैर्निहीनेषुअसकृत्पृत्यहं निर्लज्जमुपनिबद्धांवि रचितांअतएवाहितोच्छिष्टभावांचर्वितचर्वणवदन्यत्रदेहसंको चदन्तविवरणांजलिमुद्रापुरस्सरंदैन्याभ्यर्थनरूपामेव। इहत्व च्चरणकमलयोरपिआत्मनः सर्वस्यसमर्पणेपितामेवनुतिभंगीं स्तुतिरीतिंस्तोत्रस्यप्रकारमर्पयित्वाउपहारतयासमर्प्याप्यपरा ध्येवजातोस्मि । अत्यल्पफलायसर्वविधेनापिनीचेषुरचितामे वतेनोच्छिष्टांस्तुतिमेवत्वयिसमर्प्याप्यपराध्येवजातोस्मि । स र्वदातरिशिवेत्वयिसत्यपिनीचकृतयाच्नाविनिन्दितै वेतिभा वः । उक्तंकुवलयानन्दे ॥ त्वयिसतिशिवदातर्यस्मदभ्यार्थि तानामितरमनुसरन्तोदर्शयन्तोर्थिमुद्राम् । चरमचरणघातैर्दु ग्धंदोग्धुकामाः करभमनुसरामः कामधेनौस्थितायामितिन्या येनहीनकृतस्तुतिरीतिमेवत्वय्यपिदत्वापराध्येवास्मीतिभावः। भक्ष्याशयाहिमंजूषांदष्ठाखुस्तेनभक्षितइतिवत्प्रसादायकृतमपि स्तोत्रमपराधायासीदितिविषमालंकारः । ननमयययुतेयम्मा लिनीभोगिलोकैरितिलक्षणान्मालिनीवृत्तम् ॥ ४८ ॥

मू० ॥ सर्वंसदाशिवसहस्वममापरा
धं मग्नंसमुद्धरमहत्यमुमापदब्धौ ।
सर्वात्मनातवपदांबुजमेवदीनस्वामि-
न्ननन्यशरणश्शरणंप्रपद्ये ॥ ४९ ॥

टी. हेसदाशिवमहाकैलासवासिन् अत्रसदाशिवशब्द

वाच्यापंचविंशतिमुखपंकजापंचाशद्भुजदण्डमण्डिताविधि वि
ष्णुरुद्रेश्वरातीतामनोन्मनीशक्तिसमेतास्फटिकप्रभमहाकैलास
वासिनीकेवलानुग्रहपरासादाख्यशिवमूर्त्तिरुक्तासीत् । स्वा
पराधक्षांतिपूर्वकमनुग्रहायसर्वानुग्रहैकमूर्त्तिस्मृताभवति । देव
ममसर्वमपराधम् । त्वद्दत्तमिंद्रियादिकमवाप्यगर्भजन्मस्वर्गन
रकादिभ्रमणसमयेषुपरमसहायभूतम् । अस्मिन्जन्मनिचचिंति
तमनोरथपूरकंपारमार्थिकस्वरूपंत्वांसोहं शिवोहंब्रह्मैवाहम
स्मीतिप्रत्यहंसकृदप्यगणय्यकृतघ्नएवसन्नीचविरचितसन्मान
तएवकृतकृत्यमात्मानंमन्यमानः अतएवाशिवद्रोहिणोमम ।
सर्वंवाङ्मनःकायसम्भवमपराधमागः सहस्वक्षमस्व । अपि
चमहतिसंसारापदब्धौनिमग्नम्मांसमुद्धर । नन्वस्यदीक्षितच
रणस्यापद्वार्त्ताका॥यतः परमेश्वरेणोद्धर्त्तव्यम् । अयंतुभरद्वाज
गोत्रेसद्द्विजकुलेजनि । ततस्तत्कालसंस्कारसंस्कृतः । वीरनृसिं
ह्मचिन्नबोम्मादिभूपतिसमर्चितविग्रहः सुगुणसुते स्सहयज्ञेश्व
रमाररांघस्त्वयममानुषवैभवान् भुविदर्शयन् चतुराधिकशताशि-
वपारम्यप्रबन्धगंगाप्रवाहेनभुवंशुद्धीकुर्वन्नासीदितिप्रसिद्धेःता
दृशस्यमहात्मनः कावापद्वार्त्ता । सत्यमेव । तथापिपुराश्रीक
ण्ठविद्येश्वरः किलावततार । तस्यैतस्यत्वदुदितंसंसारसम्प
त्कुलंसर्वंदुःखप्रायमेवहि । पुनस्स्वपदप्राप्तयेदेवस्यदयांविना
नालमेतत्सुतधनयागादिसाधनमिति जानन्दीनगिरापरिदेव
यन्ययाचेइत्याभिप्रायः । मेरुशिखरसुधर्माख्यसभाधिष्ठितस्यें
द्रस्यभुविकर्कशशिलास्थितिवद्दुःखदमेवेतिभावः । पुनर्लौकि
करीत्यातेमहांतस्सुखिनश्च । श्रु । अहंस्वानामुत्तमोसानिदेवाः
इतिवत्तद्दाक्षिणात्यानांद्विजानाम्मध्येमहाविद्वान् यशस्वीतिप्र

थितकीर्त्तिरेव॥किंपुनस्सत्वगुणानामार्यावर्त्तदेशवासिनां।तस्या
स्यप्रसिद्धिर्महत्यस्त्येव। तस्यापीहश्रेयसितृष्णैरेवकदाचत्वबांध-
वांवहवस्संभूयकिन्तवाचिंतितमस्त्यस्माभिःपूरणीयमित्यपृच्छ
न्।तदुत्तरमेवमाह।"चिदंबरमिदंपुरंप्रथितमेवपुण्यस्थलम्सुता
श्चविनयोज्वलास्सुकृतयश्चकाश्चित्कृताः। वयांसिममसप्ततेरुप
रिनैवभोगस्पृहानकिंचिदपिचिंतयेशिवपदंदिदृक्षेपरम्। अस्यता
त्पर्यम्।शिवाज्ञयाप्राग्विरिंचिपुरेमातुलग्रहेजानित्वाअडयफला
ग्रहारेकौमारावस्थान्नीत्वा॥मध्यार्जुनकावेटिचन्द्रगिरिप्रुसेषुग्रा
मेषुयक्षाचरमसमयेदैवाच्चिदंबरपुरम्मुक्तिस्थलंलब्धम्।"तमेतंवे
दानुवचनेनब्राह्मणाविविदिषंतियज्ञेनेत्यादि श्रुतिविहितानि
कर्माणिपुत्रादिभि स्सहरचितानिद्विसप्ततिवयांस्यतिक्रामन्।
ततश्चभोगवांछालेशोपिनास्ति। ततःकिंचिदपिनाचिंतयामि।
परंतुशिवपदंशिवस्वरूपमेवद्रष्टुमिच्छामि। यूयंकिम्मन्मनोरथं
पूरयिष्यथेतिभावः। हेस्वामिन्नहमनन्यशरणः। नविद्यतेश
रणमन्ययस्य॥सोऽनन्यशरणः।अहंसर्वात्मनासर्वप्रकारेणतव
पदांबुजमेवशरणंप्रपद्येइत्यर्थः। उक्तंवसंततिलकंतभजाजगौग
इतिलक्षणाद्वसंततिलकवृत्तम्॥४९॥

मू०॥ आत्मार्पणस्तुतिरियंभगवन्निब
द्धायद्यप्यनन्यमनसानमयातथापि।
वाचापिकेवलमयंशरणं वृणीतेदीनो
वराकइतिरक्षकृपानिधेमाम्॥५०॥

टी. हेभगवन्इयमात्मार्पणस्तुतिः तत्रतत्रबहुस्थलेषुआ

त्मानम्मेसहपरिकरैरिति । त्वयिनिविशतामंतरात्मन्ममात्मे
त्यात्मसमर्पणाभ्यासादात्मार्पणस्तुतिः । अथवापराशिवे आ
त्मानमभिमानिनमर्पय न्तदाकारएवास्थित्वाप्रवर्त्तितास्तुतिरू
पावाणीयासाप्यात्मार्पणस्तुतिः । सेयंस्तुतिर्मया अनन्यम
नसावर्णपदवाक्यार्थशोधनपूर्विकानानिबद्धा । यद्यपिअयंन्दी
नोवराकःवाचापिवाचैवकेवलंशरणंवृणीते इतिमत्वाकृपानिधे
दीनंमिहीनमेनम्मांरक्षपालयेत्यर्थः। वसन्ततिलकवृत्तम्॥५०॥

## आत्मार्पणस्तुतिस्सम्पन्ना ।

श्रीमद्दीक्षितविद्येशदेशिकाज्ञावशंवदः। शिवानन्दयतिर्व्याख्यां
चकारेतियथामति । शिवमस्तु ॥

---

| पुटः | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १४ | बोद्धम् | बोद्धुम् |
| ३ | ८ | ग्रहीतम् | ग्रहीतुम् |
| [illegible] | ४ | ब्रह्मा | ब्रह्म |
| ५ | ६ | कत्त | कर्त्त |
| ५ | ९ | जड | जडः |
| ११ | १० | मन्त्रा | मन्त्राः |
| ११ | २४ | त्रीमि | त्रीणि |
| १३ | ६ | पारया | पारय |
| १४ | २ | तृष्यै | तृष्णै |
| १५ | ६ | प्पधि | प्यधि |
| १७ | ५ | द्ध्यन | द्ध्यान |
| २१ | १६ | बहू | बहु |
| २१ | १७ | वांछाया | वांछया |
| २२ | ६ | वीयोग | वियोग |
| २३ | ६ | व्यथर्यन् | व्यर्थयन् |
| ३० | १७ | मुङ् | मूङ् |
| ३१ | १५ | अश्रद्धा | अऽश्रद्धा |
| ३४ | ११ | श्रीसुतश्च | श्रीसूतश्च |
| ३६ | ४ | तैस्ससहा | तैस्सहा |
| ४७ | २० | शांपादि | शापादि |
| ४७ | २० | निवृत्यथच | निवृत्यर्थच |
|  | २२ | प्रथाम | प्रमथा |
|  | १७ | दिक्षा | दीक्षा |
| २ | ८ | त्वमवे | त्वमेव |

| | | | |
|---|---|---|---|
| ६१ | १० | परीक्ष्या | परीक्ष्य |
| ६२ | २ | पुत्रस्ये | पुत्रस्य |
| ६५ | १२ | कौति | कोति |
| ६५ | १६ | गृण्हति | गृण्हाति |
| ६८ | २ | विषप्य | विषय्य |
| ६८ | १५ | म्रयाग | म्रगया |
| ७१ | १५ | यैथाद्र | यथार्द्रै |
| ७१ | १६ | धूम | धूमा |
| ७१ | २१ | निष्यक्ष | निष्पक्ष |
| ७१ | २३ | परम्महेश्वरम् | परमम्महेश्वरम् |
| ७२ | १९ | संध | संघ |
| ७६ | १७ | स्त्विक्ते | स्त्वित्युक्ते |
| ८४ | २ | अनवचरितम् | अनर्घचरितम् |